आनन्दाश्रमसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः १२६ ।

परमेश्वरकृतकर्मदीपिकाख्यव्याख्यासंवलितं
श्रीभास्कराचार्यप्रणीतं

# महाभास्करीयम् ।

---

तदिदम्
आपटेकुलोत्पन्नेन दत्तात्रेयसूनुना बलवन्तरायेण
आनन्दाश्रमस्थपण्डितानां साहाय्येन
संशोधितम् ।

एतच्च
रावबहादुर इत्युपपदधारिभिः
गंगाधर बापूराव काळे
जे. पी. इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८६६ ।
खिस्ताब्दाः १९४५ ।

---


मूल्यं सपादो रूपकः ( १।४ ) ।

# महाभास्करीयम् ।

( परमेश्वरकृतकर्मदीपिकाव्याख्यासहितम् ) ।

# श्रीशंकरः शरणम् ।

अयि पण्डितोत्तंसा आनन्दाश्रमप्रणयिनः, महदेतत्प्रमोदस्थानं यत्परमेश्वराचार्यकृत ‘ कर्मदीपिका ’ नामकव्याख्यासहितं महाभास्करीयग्रन्थरत्नं श्रीमतां पाणिपल्लवं समलंकर्तुं इतः प्रेष्यत इति ।

अस्मिन्ग्रन्थरत्ने प्राधान्येन ज्योतिर्गणितविषयः प्रतिपादितः । भास्करनामसादृश्यात् केचन एवं संदिहीरन् यत् सिद्धान्तशिरोमणिकर्ता भास्कराचार्य एव ग्रन्थस्यास्य प्रणेतेति । परं महाभास्करीयप्रणेता भास्कराचार्यस्तु प्रागुक्तभास्कराचार्याद्भिन्नान्तं भिन्नः । शिरोमणिकर्ता भास्कराचार्यः * १०७२ तमे शालिवाहनवर्षे भारतवर्षं निजसद्भावेन अलमकार्षीत् । अयं महाभास्करीयकारस्तु भास्कराचार्यः + ४४४ तमेऽब्दे भारतवर्षं मण्डयामास ।

तत्राऽऽदौ ज्योतिःशास्त्रीयग्रन्थप्रणेतॄणां यावद्बुद्धिबलोदयं कालानुक्रमेण संक्षेपत ऐतिह्यं वक्तुमभिलषामः । तत्र ज्योतिःशास्त्रीयग्रन्थेषु द्वैविध्यं दरीदृश्यते । पौरुषेया अपौरुषेयाश्चेति । सूर्यसिद्धान्तादयो ग्रन्था अपौरुषेयाः । वराहमिहिरादिभास्कराचार्यान्तग्रन्थकृद्भिर्विरचिताः पञ्चसिद्धान्तिकासिद्धान्तशिरोमणिप्रभृतयो ग्रन्थाः पौरुषेयाः । तत्र तत्तद्ग्रन्थकृतोऽधिकृत्यैव विवक्षामः ।

तत्र सूर्यसिद्धान्तव्याख्याविषये प्रस्तूयते । तत्र भास्कराचार्याणां ( ४४४ ), कोल्लापपाश्रितां गणकोपकारिणीं श्रीधराचार्यतनुजनुषां पद्मयाचार्याणां ‘ कल्पवल्ली ’ वेङ्कटाम्बा—मल्लयज्व—समुद्भूतानां तिम्मयज्वनां ‘ कामदोग्ध्री ’ रङ्गान्तेवासिनां श्रीकण्ठनाम्नां ‘ विवरणम् ’ बल्लालात्मजरङ्गनाथकृत—‘ गूढार्थप्रकाशिनी ’ ( शा० १५२५ ), कृष्णदेवज्ञात्मजनृसिंहदैवज्ञकृतं ‘ सौरभाष्यं ( शा० १५३३ ), विश्वनाथकृतं सोदाहरणा ‘ गहनार्थप्रकाशिका ’ ( शा० १५५० ) माधवात्मजदादाभाई ढोंढेकरविरचिता ‘ किरणावली ’ ( शा० १६४१ ), देवदत्तात्मजभूधरकृतं ‘ विवरणं ’ ( शा० १५७१ ) भैरवकृतसूर्यसिद्धान्तव्यागणितम् ।

साम्यम्—सूर्यसिद्धान्तस्याः काश्चन कल्पना आर्यभटगुप्तलल्लादीनां कल्पनाः संवदन्तितमाम् । अस्तु वा पद्यादिविषये भिन्नत्वं परं प्रक्रियास्तु तन्तत्या अन्यत्याश्च नितान्तमेकवाक्यतापन्नाः सन्ति । न तत्र लेशतोऽपि भिन्नत्वम् । यथा सूर्यसिद्धान्ते—अ० ५ श्लो० १० अत्र लम्बननतिसाधनमुक्तम् । तदेव खलु ब्राह्मस्फुटसिद्धान्ते अ० ५ श्लो० २४, अ० ११ श्लो० २३–४, अत्र संल-

---

* गोलाध्याये—रसगुणपूर्णमही १०३६ समशकनृपसमयेऽभवन्ममोत्पत्तिः । रस३६गुणवर्षेण मया सिद्धान्तशिरोमणी रचितः–प्रश्नाध्याये ॥ ५८ ॥ +लघुभास्करीये मध्यमाधिकारे १७ “ याभावोनाघ्नकाब्दाद्वृषनशकलयहाम्नमद्दैवकहयरागैः ” ‘ याभाव ’ इत्यनेन कटपयादिसंज्ञया ४४४ शाको भट्टाब्द इति परमेश्वरेणागादि ।

दृश्यते । अपि च कोणशङ्कुदृग्ज्यानयनार्थं सूर्यसिद्धान्ते अ० ३ श्लो० २८–३२ अत्र यन्नयनपथमारोहति तदेव खलु ब्राह्मस्फुटसिद्धान्ते अ० ३ श्लो० ५४–६ अत्र दृग्गोचरी भवति । अन्यच्च ग्रहाणां तात्कालिकगत्यानयनार्थं यत् सूर्यसिद्धान्ते अ० २ श्लो० ३९—४३ अत्र स्फुटीकृतं तदेव किल लल्लाचार्यप्रणीतशिष्यधीवृद्धिदे अ० १५ श्लो० १५, अ० ३ श्लो० ४३, भास्कराचार्यकृतमहाभास्करीये मध्यमा० ३१, पञ्चसिद्धान्तिका० अ० ९ श्लो० १३ विशदीकृतम् । अथापि वा मन्दस्पष्टात स्फुटगतिमानेतुं सूर्य० अ० २ श्लो० ५०–१, ब्राह्म० अ० २ श्लो० ४१–४ सोमसि० अ० २ श्लो० २९, लल्ल अ० २ श्लो० ४४–६, ग्रहगणित० स्पष्टा० ३९ अत्र सर्वत्रापि एकवाक्यतैव दरीदृश्यते । अथापि च दृग्ज्यानयनार्थं सूर्य० अ० ५ श्लो० ५–६, आर्य० गोल० ३३, ब्राह्म० ११ श्लो० २७, वराहकृतपञ्चसि० अ० ९–२४–५ इत्यत्र निर्दिश्यते । दिङ्मात्रमेतदुक्तम् । विस्तरभयात् साकल्येन न वक्तुं पार्यते ।

इतः परं पौरुषग्रन्थान् अधिकृत्य मनागिव विवरीतुं कामयामहे । वृद्धार्यभटकृत आर्यभटीये ( शा० ४२१ ), सूर्यदेवकृता आर्यभटसूत्रार्थप्रकाशिका श्रीपरात्मजयल्लयाकृतटीका परमेश्वराचार्यकृता भटदीपिका ( शा० १३५२ ) भास्कराचार्यकृत ( शा० ४४४ ) टीका ।

ग्रन्थस्य विशेषस्तु इत्थम्–युगपादाः समाना इति प्रतिपादनम् । अर्धज्योपयोगः । परिधिव्यासयोर्यद्गुणोत्तरं १८८३२ । २००० तत्स्थूलमानेनेति प्रकटीकरणम् । संख्याज्ञानसौकर्यार्थं कटपयादिपद्धतेः ' अङ्कानां वामतो गतिः ' इति रीतिमङ्गीकृत्यैव प्रस्थापनम् । वृत्तप्रतिवृत्तकल्पना, पृथिव्या दैनंदिनगतिसद्भावकल्पना, कुट्टकस्य निर्देशः, अर्धरात्रिक—औदयिकयोर्द्वयोर्भिन्नयोः पद्धत्योर्भूलोकनिवासिनां गणकानां प्रमोदाय समुद्भावनम् ।

वराहमिहिरस्य पञ्चसिद्धान्तिका बृहज्जातकं च । तत्र पञ्चसिद्धान्तिकायाः पौलिशरोमकवासिष्ठसौरपैतामहनामकाः पञ्च सिद्धान्ताः । तेष्वपि स्पष्टतरः सावित्रः । अन्ये शिथिलाः । बृहज्जातकमधिकृत्य भटोत्पलस्य टीका ( शा० ८८८ ) वर्तते ।

वृद्धार्यभटस्य साक्षादन्तेवासी भास्कराचार्यः ( शाके ४४४ ), तेन लघुभास्करीयमहाभास्करीये इति ग्रन्थद्वयं व्यरचि । तत्र लघुभास्करीयटीका परमेश्वरकृता व्याख्या ( शा० १३५३ ), सुन्दरी, प्रभाकरस्य तन्त्रप्रदीपः, नारायणात्मजशंकरस्य भास्करीयविवरणम् , महाभास्करीये तु परमेश्वरकृता कर्मदीपिका,

सिद्धान्तदीपिका, ( १३५३ ), भास्करस्य टीका, गोविन्दस्वामिभाष्य, प्रयोगरचना मक्किभट्टकृतो गणितविलासः ( शा० १२९९ ), रुद्राशिष्यश्रीकण्ठस्य टीका,

चतुर्वेदपृथूदकस्वामिना ( शा० ७८६ ) ब्रह्मस्फुटसिद्धान्तं प्रकृत्य या महती टीका प्रणीता तस्यामस्य भास्करस्य ( ब्राह्म० तन्त्रा० २६ ) निर्देशो दृश्यते । ब्रह्मगुप्तेनापि बहुत्र न्यूनाधिकप्रमाणेनाऽऽर्यभटीयमुद्दिश्य टीका विहिता । नैतावदपि स्वग्रन्थे स्वातन्त्र्येण तन्त्राध्यायोऽपि विरचितः । तथाऽपि ब्रह्मगुप्तविरचितब्राह्मस्फुट-सिद्धान्ते टीकाकृच्चतुर्वेदपृथूदकस्वामी । अनेन आर्यभटस्य विचारसरणिः क्वचिद् यथार्था ब्रह्मगुप्तस्य विचारसरणिस्तु न तादृशीति स्पष्टमुक्तम् । लघुभास्करीय ग्रन्थस्योल्लेखः सिद्धान्तशिरोमणिकृता भास्कराचार्येण बीजगणिते *कृतः ।

विशेषः—महाभास्करीयनामकोऽयं ग्रन्थ आर्यभटेन रचितस्य ग्रन्थस्य आर्यभटीयस्य पूरणिका इति वक्तुं युक्तम् । आर्यभटेन येषां विषयाणां निर्देशो न कृतस्तेषामनेन भास्करेण कृतः । नैतावत् केषांचिद्विषयाणां विशिष्य स्पष्टीकरणमपि कृतम् । यथा—चन्द्रग्रहणसूर्यग्रहणयोर्विशिष्टो विचारः सविस्तरश्च विहितः । दृक्कर्मशृङ्गोन्नतिच्छेद्यकानां विवरणमाधिक्येन वर्तते । आर्यभटीयग्रन्थे न तथा छेद्यकविचारो यथा सुस्पष्टतया महाभास्करीये । ग्रन्थस्यास्य अष्टा-वध्यायाः । भिन्नभिन्नवृत्तानि ३९५ पद्यानि सन्ति । लघुभास्करीयग्रन्थोऽप्येतत्तुल्य एव । आर्यभटः स्वग्रन्थे कुट्टकविचारं सूत्ररूपेण कृतवान् । परमयं भास्कराचार्यस्तु कुट्टकस्य महत्त्वं ज्ञात्वा स्वग्रन्थे विशेषतः कुट्टकस्य स्पष्टता वल्लिकुट्टाकारः, वारकुट्टाकारः, वेलाकुट्टाकार इति विभागत्रयेण विहितवान् । ब्रह्मगुप्तेन ब्राह्मस्फुटसिद्धान्तः ( शा० ५५० ) खण्डखाद्यकं चेति द्वौ ग्रन्थौ व्यरचिषाताम् । पूर्वं ब्रह्मगुप्त आर्यभटं तीव्रं दूषयति स्म । परं स्वमतानुयायिनामभावात् खण्डखाद्यकग्रन्थस्य निर्मि-तिर्नाप्राप्ता । तस्मिन् ग्रन्थे आर्यभटसिद्धान्तैः सह स्वसिद्धान्तानां समन्वयमकार्षीत् ।

---

*आसीन्महेश्वर इति प्रथितः पृथिव्यामाचार्यवर्यपदवीं विदुषां प्रपन्नः । लब्धा-वबोधकलिकां तत एव चक्रे तज्जेन बीजगणितं लघुभास्करेण । एतत्पद्यस्थे लघु-भास्करेण इति पदे लघु इति भास्करस्य विशेषणमुत लघु अत्र पदच्छेद इति पक्षद्वयमुद्भावितम् । अनेन टीकाकृत्सु मतभेदो दृश्यते ।

अनेन अस्मिन्खण्डखाद्यके +ग्रन्थे ' अर्धरात्रिका ' पद्धतिरङ्गीकारि । असकृत्कर्मणा तिथिनत्योः साधनं ब्रह्मगुप्तेन आगमप्रामाण्येन स्वीकृतम् । तदेव खलु सिद्धान्तशिरोमणिकृता ( शा० १०७२ ) भास्कराचार्येणावलम्बितम् ( ग्रहगणिते स्पष्टा ६ वासना ) खण्डखाद्यकस्य खण्डखाद्यकमुत्तरखण्डखाद्यकं चेति भागद्वयं वर्तते । तत्र खण्डखाद्यं, आमराजटीकासहितं कलिकातायां मुद्रितमेव ( शा० १८४६ ) उत्तरखण्डखाद्यं तु नाद्यापि मुद्रितम् ।

खण्डखाद्यके लल्ल ( शा० ६७० ), भटोत्पल ( शा० ८८८ ), चतुर्वेदपृथूदकस्वामि ( शा० ७८६ ), सोमेश्वर, महादेवात्मज आमराज, वरुणा( शा०९६२), श्रीमां व्याख्याः सन्ति ।

लल्लस्य शिष्यधीवृद्धिदः ( शा० ६७० ) इति ग्रन्थः प्रथते । स च आर्यभटानुयायी । तस्मिन् मल्लिकार्जुनसूरेर्व्याख्याऽस्ति ।

महावीराचार्यस्य गणितसारसंग्रह ( शा० ७७५ ) इति ग्रन्थो विदित एव विदुषाम् । अत्र कुट्टकविचारः सविशेषो दृश्यते ।

श्रीधराचार्यस्य त्रिशतिका ( शा० ७७५ ) विदुषां विदितचरैव । भास्कराचार्य ( शा० १०७२ ) इमं ग्रन्थमुदलिखत् । वित्तेश्वरस्य करणसारः । (शा० ८२१) ।

मुञ्जालाचार्यस्य लघुमानसं (शा० ८५४) बृहन्मानसं चेति ग्रन्थद्वयम् । लघुमानसस्य टीकाकृत एते—सूर्यदेवयज्वा रुद्रशिष्यः श्रीकण्ठः श्रीधरसूनुर्यल्लयार्यः, चतुर्वेदपृथूदकस्वामि ( शा० ८८६ ) प्रशस्तिधरः ( शा० ८८०) परमेश्वराचार्यश्च ( शा० १३३१ ) लघुमानसग्रन्थस्य विशेषः—अन्यत्राद्दष्टोऽयनगत्युल्लेख एतस्मिन् दृश्यते। वर्तुलस्य चतुर्षु भागेषु कृतेषु ओजपदान्ते भुजकोट्योः समानता भवति।

भटोत्पलः (शा० ८८७ ), विजयनन्दिकृतः करणतिलकः ( शा० ८८८ ) ।

आर्यभटस्य लघुआर्यभटीयो [ शा० ८५४—१०७२ ] ग्रन्थः । कल्पारम्भो रविवासरे इत्यनेन मतः । अयनांशान् आनेतुं या खल्वनेन रीतिः स्वीकृता सा न्यूनाधिकप्रमाणेन भासते । संख्यां दर्शयितुं या च परिपाटी अनेनाङ्गीकृता सापि अङ्कानां वामतो गतिः इति पद्धतिं कचिदुल्लङ्घते ।

---

+ अत्र केचन खण्डखाद्यकमिति ग्रन्थनाम ग्रन्थकर्त्रा किमिति विहितमिति शङ्केरन् । तत् कारणं चतुर्वेदपृथूदकस्वामिना ' खण्डेन मिश्रं खाद्यकं खण्डखाद्यकम् । भक्ष्यविशेषं भुञ्जानस्य सुखं भवति । तथेदमपि करणं गणयितुः । भवति इत्यादिना ग्रन्थेन स्फुटीकृतम् ।

श्रीपतिनाऽऽचार्येण सिद्धान्तशेखरः ( शा० ९५० ), गणिततिलकं श्रीपतिरत्नमाला श्रीपतिपद्धतिः, वा जातकपद्धतिः, ध्रुवमानसम् [ शा० ९७८ ], धीकोटिदकरणम् ( शा० ९६१ ) इत्येते ग्रन्थाः प्रणीताः । सिद्धान्तशेखरोपरि माक्किभट्टविरचिता गणितभूषणाख्या व्याख्या विद्यते । परं न साकल्येन । सिद्धान्तशेखरीयो विशेषः—उदयान्तरसंस्कारः [ ग्रहयुद्धा० १ ], अग्रान्तरसंस्कारः ( त्रिप्रश्न० ३ ), भुजांशानयनम् [ त्रिप्रश्न ७०–१ ], अयनचलनम् [ ध्रुवमानसम् ], दिक्साधनम् ( त्रिप्रश्न ३ ), ज्याखण्डैर्विना गणितस्य प्रकारः ( स्फुटा० १७ ) कालान्तरसंस्कारः ।

क्षयमासविषयकस्य उल्लेखः, भानुभट्टेन [प्राक् शा० ९६२] रसायनतन्त्रं करणपरतिलकः, आदित्यप्रतापसिद्धान्तः (शा०९६४), भोजराजस्य राजमृगाङ्कः [शा० ९६४], दशबलस्य करणकमलमार्तण्डः ( शा० ९८० ) महेश्वर [ प्रायः शा० १००० ] ब्रह्मदेवकृतकरणप्रकाशः [ शा० १०१४ ] शतानन्दकृतभास्वतीकरणम् ( शा० १०२१ ), करणोत्तम [ शा० १०३८ ] अभिलषितार्थचिन्तामणिः [ शा० १०५१ ]

भास्कराचार्येण सिद्धान्तशिरोमणिर्नाम ग्रन्थः प्रणीतः । तस्य लीलावती ( पाटीगणितम् ) बीजगणितम् । ग्रहगणिताध्यायः, गोलाध्यायश्चेति चत्वारो विभागाः । तथा च बीजोपनयः ( शा० १०७४ ), करणकुतूहल( शा० ११०५ )श्चेति ग्रन्थद्वयं तेनैव प्रणीतम् । तत्र लीलावत्याष्टीका उच्यन्ते—लक्ष्मणात्मजरामकृष्णविरचितगणितामृतलहरी लीलावतीवृत्तिः ( शा० १६०९ ) लक्ष्मीदासस्य, गोवर्धनस्य, रुद्रशिष्यश्रीकण्ठस्य टीका, भीमदेवात्मजमोसदेवकृतवृत्तिः । परमेश्वरस्य सव्याख्या । रङ्गनाथकृतव्याख्याविलासः । महापात्रश्रीधरकृतसर्वबोधिनी व्याख्या । नारायणस्य कर्मप्रदीपिका । केशवसुतगणेशदैवज्ञस्य बुद्धिविलासिनी ( शा० १४६७ ) ढुंढिराजात्मजगणेशस्य गणितमञ्जरी ( शा० १४८० ) । धनेश्वरकृतलीलावतीभूषणम् ( शा० १४६३ ) । रङ्गनाथसुतमुनीश्वरस्य निसृष्टार्थदूतिः ( लीलावतीविवृतिः शा० १५५७ ) । ज्ञानराजसुतसूर्यदासकृता गणितामृतकूपिका ( शा० १४६३ ) । गोवर्धनसुतगङ्गाधरकृतगणितामृतसागरी ( शा० १३४२ ) । सदाशिवसुतरामकृष्णकृतमनोरञ्जनम् । घनश्यामसुतरामकृष्णमनोरञ्जनटीका प्रा० ( शा० १६८२ ) । महीदासस्य लीलावतीटीका ( शा० १५०९ ) । महीधरस्य लीलावतीविवरणम् ( शा० १५५७)। नृसिंहसुतरङ्गनाथमितभाषिणी (शा० १५५२) । × गिरिधरकृतप्राकृतटीका, सोमसाधु, उदयराम, लाभवर्धन प्रेमजी, मोक्षदेव, एतेषां संस्कृतेतरटीकाः सन्ति ।

---

× भाण्डारकरसंग्रहः ।

बीजगणितटीका:——अमरावतीसंस्थितश्रीमन्नृसिंहदैवज्ञात्मजलक्ष्मणदैवज्ञसुतसिद्धान्तदैवज्ञरामकृष्णविरचितबीजप्रबोध: ( शा० १६०९ )। ज्ञानराजसुतसूर्यदासस्य बीजभाष्यम् [ शा० १४६३ ]। कृष्णदैवज्ञकृता बीजनवाङ्कुरा [ बीजपल्लव: वा कल्पलतावतार: १५२४ ] जनार्दनदैवज्ञकृतं बीजोदाहरणम्। हरिदासस्य वासनाभाष्यम् अहमदाबादस्थकृपाराममिश्रस्य बीजोदाहरणबालबोधिनी [ शा० १७१४ ]। साम्यम्——अनेकवर्णस० १३८——महावीराचार्यस्य गणितसारसङ्ग्रह अ० ६–१५२ पृ० ८५ ॥ ग्रहगणितटीका:——भैरवात्मजगोपीनाथकृतसिद्धान्तसूर्योदय [ शा० १४५० ] रङ्गनाथसुतमुनीश्वरस्य ( विश्वरूप ) मरीचिटीका [ शा० १५५७ ]। लक्ष्मीदासस्य गणिततत्त्वचिन्तामणि: [ शा० १४२२ ]। कृष्णसुतनृसिंहस्य वासनाभाष्यम् [ शा० १५४३ ]। नृसिंहात्मज रङ्गनाथस्य मितभाषिणी [ शा० १५८० ]। विशेष:—मध्यमा कक्षाध्याय: ८–९, प्रत्यब्दशुद्धि: १४, अधिमासादिनिर्णय: २, ५ त्रिप्रश्ना २२ ४७–८, ६३–५ ६८, पर्वसंभव० ३—५, सूर्य० १८–२०, ग्रहच्छाया १४–५, उदया ५, ११—२, भग्रह १५—२१, पाता, ३–६, १८—२० । गोलाध्यायस्य टीका:—मुनीश्वरस्य [ शा० १५६० ]। लक्ष्मीदासस्य [ शा० १४२२ ]। नृसिंहस्य वासनावार्तिक [ शा० १५०८ ]।

गोलाध्यायान्तर्गतविशेषस्थानानि:—भुवन ३७–४०, ४६–७, मध्यमगति १३–५, गोलबन्धा ३, ७, २५–६ त्रिप्रश्न ६–७, २५ ।

मरीचिटीका० पृ० १६०। गोला० भुवनकोष० ५२। करणकुतूहलस्य [ शा० ११०५ ]। विश्वनाथकृतटीका, करणकुतूहलभाष्य [ शा० १३६३ ]। शंकर: [शा० १५४१ ]। नार्मदात्मजपद्मनाभ [ प्राय: १६६१ ]। सोढल [ शा० १३८५]। एकनाथ। सुमतिहर्ष [ शा० १५४१ ] तदनन्तरम्–बीजोपनय वामनात्मजचक्रधरकृतयन्त्रचिन्तामणिटीका कृपाराम [शा० १४२०]। राम [शा० १५४७]। दिनकर [शा० १५६७]। नृसिंहसुत नारायणकृतगणितकौमुदी [शा० १२७८]। महेन्द्रसूरिकृतयन्त्रराज [ शा० १२९२ ]। टीका यज्ञेश्वर: [ शा० १७६४ ]। मलयेन्दुसूरि [ प्राय: १३०० ]। अनन्तदेव, [ शा० ११११ ]। श्रीधराचार्यकृत-

लघुखेचरसिद्धिः [ शा० ११४९ ] केशवकृतविवाहवृन्दावनम् [ शा० ११६५ ], उल्ल–मुडयनकृतकरणम् [ शा० ११६५ ], वाविलालकोचन्ना [ शा० १२२० ] महादेवकृतग्रहसिद्धिः [ शा० १२३८ ], नृसिंहसुतनारायणकृतगणितकौमुदी [ शा० १२७८ ], अनन्त [ शा० १२७९ ], महादेवकृतकामधेनुकरणम् [ शा० १२८९ ], नार्मदम् [ शा० १३०० ], पद्मनाभ [ शा० १३२० ], दामोदर [ शा० १३३९ ], परमेश्वरकृतगोलदीपिका [ शा० १३५३ ], गङ्गाधर [ शा० १३५६ ], मिर्जाउलुकबेग [ शा० १३५९ ], विहणकृतवार्षिकतन्त्रम् [ शा० १४०० ], केशवकृतमकर [ शा० १४०० ], *परमेश्वर [ शा० १३५३ ], ×नीलकण्ठ [ शा० १३७२–१४७२ ], वाक्यकरणम् [ शा० १४१३ ], गणेश [ शा० १४१८ ], कृपाराम ( शा० १४२० ), लक्ष्मीदास [ शा० १४२२ ], ज्ञानराज ( शा० १४२५ ),

केशवात्मजगणेशकृतग्रहलाघव ( शा० १४४२ ), ढुंढिराज ( शा० १४४७ ], सूर्यदासकृतबजिप्रकाशः [ शा० १४६० ], सूर्यदासकृतगणितामृतकूपिका [ शा० १४६३ ], नृसिंहस्य जन्म ( शा० १४७० ), कल्पद्रुमकरणम् [ शा० १४४२ ], रघुनाथः [ शा० १४८४ ], दिनकरः [ शा० १५०० ], गङ्गाधरः [ शा० १५०८ ], नृसिंहः [ जन्म शा० १५०८ ], शिवः [ शा० १५१० ], श्रीनाथः [ शा० १५१२ ], मल्लारी [ शा० १५२४ ], रङ्गनाथकृतगूढार्थप्रकाशिका ( १५२५ ), दिवाकरस्य जन्म ( शा० १५२८ ), रामचन्द्रसुतशंकरकृत [ शा० १५२९ ], विष्णु [ शा० १५३० ], जटाधरकृतफत्तेशाहप्रकाशः ( शा० १५३६ ), नागेशकृतग्रहप्रबोध, ( शा० १५४१ ), विश्वनाथः [ शा० १५५१ ], नित्यानन्दकृतसिद्धान्तराजः ( शा० १५६१ ), रङ्गनाथकृतसिद्धान्तचूडामणिः [ शा० १५६५ ], कृष्णदैवज्ञविरचितकरणकौस्तुभः ( शा० १५७५ ), रत्नकण्ठकृतपञ्चाङ्गकौतुकम् [ शा० १५८० ) ग्रहतरङ्गिणी ( शा० १६१८ ), सिद्धान्तमञ्जरी ( शा० १६१९ ], जगन्नाथकृतं रेखागणितम् ( शा० १६५९ ),

---

* परमेश्वरकृग्रन्थाः—दृग्गणितम् ( शा० १३५३ ), गोलदीपिका, लीलावतीव्याख्या, लघुभास्करीयगतटीकाकर्मदीपिका, आर्यभटीयगतभटदीपिका लघुमानसस्य टीका।

× नीलकण्ठकृतग्रन्थाः—तन्त्रसंग्रहः, गोलसारः, सिद्धान्तदर्पणं, आर्यभटीयभाष्यम्।

जगन्नाथकृतसिद्धान्तसम्राट ( शा० १६५३ ), पत्रागाशीरोमाणि ( शा० १६५६ ) चिंतामणिदीक्षित । ( शा० १६५८ ) नयनसुखोपाध्यायकृत-कन्नरयंत्र । ( शा० १६६२ ) । शंकरवैष्णवकरण । ( शा० १६८८ ) मणिरामकृतग्रहगणितचिंन्तामाणि ( १६९६ ) । ब्रह्मसिद्धान्तसार । ( शा० १७०३ ) यन्त्रराजघटना मथुरानाथकृत ( शा० १७०४ ) राघव [ शा० १७३२ ] शिवकृततिथिपारिजात [ शा० १७३७ ]।

**आभारप्रदर्शनम्**–तिरुपतिनगरस्थ डॉ० ए. शंकरन् एभिः मूलतट्टीकयोः देवनागर्या-क्षरयन्तरं कृत्वा प्रेषितं तद्विषये, तथा भाण्डारकरप्राच्यविद्यामन्दिरस्थ प्रा० गोडे, डेक्कनकॉलेजस्थ प्रा० कात्रे, फर्ग्युसनकॉलेजस्थ प्रा० डी० डी० कोसांबी, प्रभृतिभिः काश्चन सूचनाः प्रदाय साहाय्यमकारि तेषां सर्वेषामहमुपकारभरान् शिरसा वहामि ।

पुण्यपत्तनं श. १८६६
मा.शु, २ भौमवासरः ।

आपटेइत्युपाह्वदत्तात्रेयतनुजन्मा
बलवन्तरायः ।

ॐ तत्सद्ब्रह्मणे नमः ।

परमेश्वरकृतकर्मदीपिकाव्याख्यासहितं

# महाभास्करीयम् ।

---

कलां बिभर्ति क्षणदाकरस्य
प्रकाशिताशां शिरसा गभस्तिभिः ।
नमोऽस्तु तस्मै सुरवन्दिताङ्घ्रये
समस्तविद्याप्रभवाय शंभवे ॥ १ ॥

जयन्ति भानोः कमलावबोधिनः
करा हिमांशोर्वनिता[हि]तत्विषः ।
समूरितारास्फुटदीर्घरश्मयो
धरासुतज्ञार्तिसितत्विषं पुनः ॥ २ ॥

तपोभिराप्तं स्फुटतन्त्रमाश्मकं
चिरं समभ्येतु जगत्सु सद्गुणैः ।
चिरं च जीयासुरपेतकल्मषा
भटस्य शिष्या जितरागशत्रवः ॥ ३ ॥

किरीटहारमकरकुण्डलाद्यैरलंकृतम् ।
नमामि तं हरिं चक्रशङ्खपद्मगदाधरम् ॥ १ ॥

व्याख्याने भास्करीयस्य भाष्यस्य प्राक् प्रदर्शिता ।
ग्रहकर्मोपपत्तिस्तु सगोला विस्तरान्मया ॥ २ ॥

क्रियामात्रप्रसिद्ध्यर्थमधुना मन्दचेतसाम् ।
व्याख्याऽल्पा तस्य मूलस्य क्रियते कर्मदीपिका ॥ ३ ॥

कलां बिभर्तीति शंभुस्तुतिः । जयन्तीति ग्रहस्तुतिः । तपोभिरित्यार्यभटतन्त्रस्य तच्छिष्याणां चाऽऽशीर्वचनम् ॥ १ ॥ २ ॥ ३ ॥

नवाग्नि(द्रि)रूपाग्नियुतं महीभुजां
शकेन्द्रनाम्नां गतवर्षसंग्रहम् ।
द्विषट्कनिघ्नं गतमाससंयुतं
युगाधिमासैर्गुणयेद् द्विराशितम् ॥ ४ ॥

नवाद्रीति । नवाद्रिरूपाग्निभि ३१७९ युतं शकाब्दसमूहं द्यदर्श(द्वादश)निहितं वर्तमानवर्षैश्चैत्रादिभिरतीतैर्मासैर्युतं पृथग्विन्यस्य युगाधिमासैर्गुणयेत् । ते

बाङ्कपुष्कररामाग्निरन्ध्रेष्विन्दुमिता १५९३३३६ इति ॥ ४ ॥

युगार्कमासाप्तगताधिमासकै-
र्युतास्तिथिघ्नं गतवासरान्वितम् ।
युगावमैस्तद्गुणयेद् द्विराशितो
निशाकराहैर्विभजेत नित्यशः ॥ ५ ॥
तिथिप्रणाशाप्तिरतो विशोध्यते
भवत्यथाह्नां निचयः कलेर्गतः ।
भवन्ति वारं तिथिसूनपूजिता-
त्प्रवृत्तिमप्याहुरुदश्चतो रवेः ॥ ६ ॥

पुनर्युगार्कमासैर्विभजेत् । ते चायुतहता अब्धिवस्वेकशराः५१८४००००। तत्र लब्धैः पूर्णैरधिमासै(१५९३३३६)र्युतं पूर्वं प्रतीराशितं त्रिंशता निहत्य वर्तमानमासे प्रतिपदादिभिरतीततिथिभिर्युक्त्या पृथग्विन्यस्य युगावमैर्गुणयेत् । ते च व्योमवस्वाक्षिद्व्यष्टखेष्वश्विन(२५०८२२८०)इति ।

पुनर्निशाकराहैर्विभजेत् । ते च—खाष्टव्योमभूम्यभ्राग्निखाष्टय८०३०-१०८० इति । तत्र लब्धं पूर्णमेव फलं प्रतिराशिताद्विशोधयेत् । शिष्टं कलेर्द्युगणो भवति । अत्र यदाऽधिमासादुत्तरमासो वर्तमानमासस्तदाऽधिमासोऽपि मासत्वेन ग्राह्यः । अस्मिन्नहर्गणे शुक्रवारादिर्वारो भवति । आरम्भश्चार्कोदयात् ॥ ५ ॥ ६ ॥

प्रकान्तरेणापि द्युगणानयनमाह—

शशाङ्कमासैरभिताडिताद्धरे-
दतीतमासानथवाऽर्कसंभवैः ।
दिनीकृताद्भूमिदिनाहतान्दिनै-
र्विभज्य लब्धः शशिजैरहर्गणः ॥ ७ ॥

शशाङ्कमासैरिति । कलेरतीतात् सौरमासाद्युगशशिमासैर्निहत्य युगसौरमासैर्विभज्य लब्धं त्रिंशता निहत्य वर्तमानचान्द्रमासे गततिथिभिर्युक्तां युगभूदिनैर्निहत्य युगशशिदिनैर्विभजेत् । तत्र लब्धं द्युगणो भवति । अस्मिन्द्युगणे कदाचिद्रूपमक्षेप्यमिति वक्ष्यति ॥ ७ ॥

मध्यमानयनमाह—

उदीरितान्याद्धगणात्क्षमादिनै-
र्लभामहे तान्कलियातवासरैः ।

इति प्रलब्धा भगणास्ततः क्रमाद्
ग्रहांशलिप्ता विकलाः सतत्पराः ॥ ८ ॥

उदीरितान्यादिति । सप्तमाध्याये पठितान् भगणान् क्षमादिनैर्लभामहे । तेषु कान् कलियातपसनैर्लभामह इति त्रैराशिकेन भगणा लभ्यन्ते । स्वस्वैर्भगणैर्द्युगणान्निहत्य भूदिनैर्हृत्वा भगणा लभ्यन्ते । शेषा द्वादशादिगुणाद् भूदिनै राश्यादयश्च भवन्ति ॥ ८ ॥

कलीकृतं वा(मा)ससमं दिवाकरं
भजेत पक्षैर्युगसंख्ययोदितैः ।
स्वर्गातिकोक्तैर्भगणैः समाहता
विहंगमानां प्रवदन्ति लिप्तिकाः ॥ ९ ॥

कलीकृतमिति । अतीतवर्षाख्यैः स्वभगणैः सहितामिष्टादिनाऽऽनीतं दिवाकरं कलीकृत्य स्वैः स्वैर्भगणैर्निहत्य युगवर्षैर्विभजेत् । तत्र लब्धा इष्टग्रहस्य कला भवन्ति ॥ ९ ॥

निशाकरं वा ग्रहमुच्चमेव वा
कलीकृतं तत्सहयातमण्डलैः ।
यथेष्टनक्षत्रगणैर्हृतं हरे-
त्तदीयनक्षत्रगणैस्ततः कलाः ॥ १० ॥

निशाकरमिति । चन्द्रं वा इष्टग्रहं वा चन्द्रोच्चं वाऽतीतमण्डलैः सह कलीकृत्य इष्टग्रहस्य भगणैर्विभजेत् । तत्र लब्धा इष्टग्रहकला भवन्ति ॥१०॥

अथ चन्द्रादित्ययोरेव कर्मान्तरमाह—

युगाधिमासैर्द्युगणं हतं हरे-
त्क्षमादिनैर्वा भगणादि लभ्यते ।
त्रयोदशघ्ने सवितर्यताक्षिपे-
न्निशीथिनीनां पथिचारसिद्धये ॥ ११ ॥

युगाधिमासैरित्यादिश्लोकद्वयेन । युगाधिमासैर्द्युगणं निहत्य भूदिनैर्विभजेत् । तत्र लब्धं भगणादिफलं भवति । तत्फलं तयोर्दशगणिते सूर्ये क्षिपेत् । तच्चन्द्रो भवति । अथवा तत्फलं चन्द्राद्विशोध्य शिष्टस्य त्रयोदशांशो रविर्भवति ॥ ११ ॥

अथ द्युगणं विना चन्द्रार्कयोरानयनाय श्लोकसप्तकमाह—

विना द्विराशेरपि चन्द्रभास्करौ
प्रकुर्वतो वा विधिरेष कथ्यते ।

समासु मासीकृतविग्रहासु ये
    ह्यतीतमासा विनियोज्य तान्पुनः ॥ १२ ॥
खरामनिघ्नान्दिवसेषु योजये-
    द्गतेषु मासस्य ततोऽधिमासकैः ।
निहत्य सर्वं विभजेत सर्वदा
    युगार्कमासैर्दिवसत्वमागतैः ॥ १३ ॥
भवन्ति लब्धास्त्वधिमासकाः पुन-
    स्ततोऽपनीयाऽऽशु च भागहारकम् ।
भवेदशेषाः शशिमाससंख्यया
    ततांशलिप्ताविकलाः सतत्पराः ॥ १४ ॥
ततोऽधिमासं प्रणिहत्य खाग्निभिः
    सुयोज्य सम्यग्गतवासरैः क्रमात् ।
युगावमघ्नाच्छशिवासरैर्हरे-
    त्तमत्र शेषं प्रवदन्ति चाऽऽह्निकम् ॥ १५ ॥
हत्वाऽधिमासैरप( व )[ म ]स्य शेषं
    छित्त्वा धराया दिवसैः प्रलब्धम् ।
संयोज्य नित्यं त्वधिमासशेषे
    कार्यं पुनस्तत्करणैर्यथोक्तम् ॥ १६ ॥
युगप्रसिद्धैर्धरणीदिनैर्हरे-
    न्निहत्य षष्ट्याऽ[व]मशेषमाह्निकम् ।
कला विलिप्ताः क्रमशः सतत्परा-
    स्त्वतीतमासा दिवसा ग्रहांशकाः ॥ १७ ॥
त्रयोदशाघ्नादपि रूपताडिता-
    द्विशोधयेद्यत्त्वधिमासशेषजम् ।
निशाकरार्कौ गणकैः प्रकीर्तितौ
    भटप्रणीताविति बुद्धिमत्तमैः ॥ १८ ॥

विना द्युराशेरिति । अतीतवर्षाणि द्वादशभिर्निहत्य वर्तमानवर्षे गतांश्चन्द्रमासानपि तेषु प्रक्षिप्य त्रिंशता निहत्य वर्तमानमासे गताः संपूर्णास्तिथि:(थीः) प्रक्षिप्य युगाधिमासैर्निहत्य युगार्कमासैस्त्रिंशद्गुणितैर्विभजेत् । तत्र लब्धा अधिमासा

भवन्ति । तानधिमासानधिमासशेषं चैकत्र संस्थाप्य पुनरतीतवर्षाणि मासीकृत्यातीतमासैः संयोज्य त्रिंशता निहत्य वर्तमानमासे गतास्तिथीश्च संयोज्य तेषु लब्धानधिमासांस्त्रिंशता निहतान्प्रक्षिप्य युगावमैर्निहत्य युगचन्द्रदिवसैर्विभजेत् । तत्र शिष्टमवमशेषं भवति । तदान्ति(ह्नि)कसंज्ञं च भवति । तदेकत्र संस्थाप्य पुनः पृथग्विन्यस्य युगाधिमासैर्निहत्य युगभूदिनैर्विभज्य लब्धं पूर्वानीताधिमासशेषे प्रक्षिप्य युगचान्द्रमासैर्विभजेत् । तत्र लब्धा अंशा भवन्ति । पुनः शेषात्षष्टिघ्नाद्युगचान्द्रमासैर्लिप्तादयश्च ग्राह्याः । अत्र यथा प्रथमानीताधिमासशेषो युगाधिकदिनेभ्यो हीनो भवति तदा युगसौरदिवसयुतोऽधिमासशेषो ग्राह्यः। अधिमासाश्च तदा ह्येका भवन्तीति ज्ञेयम् । पुनः पूर्वानीतमवशेषं विन्यस्य षष्ट्या निहत्य युगभूदिनैर्विभजेत् । तत्र लब्धाः कला भवन्ति । शेषात्षष्टिघ्नात्तेनैव हारेण विकलादयश्च ग्राह्याः । पुनरस्यापि लिप्ताया उपरिभागस्थाने वर्तमानमासे गतास्तिथीः संस्थाप्य तस्योपरिराशिस्थाने वर्तमानवर्षे गतान्मासांश्च संस्थापयेत् । एवं राश्यंशकलाद्यात्मकं ग्रहशरीरं भवति । पुनस्तं ग्रहशरीरं त्रयोदशभिर्निहत्य तस्मात्पूर्वमधिमासशेषाल्लब्धमंशाधिकं विशोधयेत् । तत्र शिष्टं चन्द्रो भवति । पुनरेकनिहताद्ग्रहशरीरादाधिमासशेषजमंशाधिकं विशोधयेत् । तत्र शिष्टं रविर्भवति ॥१२॥१३॥१४॥१५॥१६॥१७॥१८॥

अथ मध्यमानयन उपायान्तरमाह—

**अम्बरोरुपरिधिर्विभाजितो**
**भूदिनैर्दिवसयोजनानि तैः ।**
**संगुणय्य दिवसानथाऽऽहरे-**
**त्कक्ष्यया भगणराशयः स्वया ॥ १९ ॥**

अम्बरेति । अम्बरोरुपरिधिराकाशकक्ष्या तदानयनं वक्ष्यति—'इन्दोर्गणाः यय(ग)वियद्रसवृन्दनिघ्ना व्योम्नो भवेयुरिह वृत्तसमानसंख्याः' इति । अनूना तत्समा नारी साध्वी सर्वप्रिया इत्याकाशकक्ष्या । तां भूदिनैर्विभज्य लब्धानि दिवसयोजनानि भवन्ति । तैर्दिवसयोजनैः कलिदिवसान्निहत्य ग्रहस्य कक्ष्यया विभजेत् । तत्र लब्धा भगणा भवन्ति । शेषा द्वादशादिगुणिताद्राश्यादयश्च भवन्ति । 'इष्टग्रहस्य भगणैर्गगनस्य वृत्तं भङ्क्त्वाऽथ तस्य परिधिं लभते समन्तात् ' इति कक्ष्यासिद्धिः । अत्र दिवसयोजनानयने हृतशेषस्तदंशो हारकस्तच्छेदस्तावपवर्त्य संस्थाप्यौ कक्ष्यायोजनानयने च हृतशेषस्तदंशो हारकस्तच्छेदस्ता-

अपवर्त्य संस्थाप्यौ दिवसयोजनान्यंशीकृत्य कक्ष्याछेदेन च निहत्य तैरिह गणना कार्या। कक्ष्यायोजनानि चांशीकृत्य दिवसयोजनच्छेदेन च निहत्य तैरिह हरणं च कार्यम् ॥ १९ ॥

अथ मध्यमानयनायोपा[या]न्तरमुपादिदृक्षुः प्रथमं तत्स्वरूपं दर्शयति—

**अदृष्टमन्यैरिदमास्मकीयैः**
**कर्म ग्रहाणां लघुतन्त्रसिद्धम् ।**
**संचिन्त्य शास्त्रार्णवमास्मकीय-**
**मुत्पाठ्य(द्य)ते तन्त्ररहस्यभूतम् ॥ २० ॥**

अदृष्टमिति। आश्मकीया आर्यभटशिष्याः। लघुतन्त्रं गणितविशेषं ग्रहाणां कर्म मध्यमानयनमाहुः ॥ २० ॥

अधिमासानयनमाह—

**रुद्रैः सहस्रहतषट्च(श)कलैश्च हत्वा**
**वर्षाणि रन्ध्रवसुवह्निसमानसंख्यैः ।**
**मुक्त्वा सदा प्रविगणय्य खरामभक्ता**
**मासा भवन्ति दिवसाश्च हृतेऽवशिष्टाः ॥ २१ ॥**

रुद्रैरिति। अतीतवर्षाणि गणयित्वा संस्थाप्य रुद्रैर्हन्यात्। ते अधिकाहा भवन्ति। पुनरपि वर्षाणि रन्ध्रवसुवह्निभि( ३८९ )र्हत्वा सहस्रा(स्रा)हतैः षड्भिर्हरेत्। तत्राप्यधिकाहा भवन्ति। तद्द्वयं संयोज्य त्रिंशता ३० विभजेत्। तत्र लब्धा अधिमासा भवन्ति। हृतशेषा अधिकदिनानि भवन्ति ॥ २१ ॥

अवमानयनमाह—

**संहत्य रन्ध्रयमलै रसरामभक्तै-**
**र्भूयोऽग्निवेदगुणितेषु हरेच्च भागम् ।**
**खव्योमवह्निमुनिभिः प्रलयस्थितीनां**
**संयोज्य भूतयमरुद्रहृते दिनानि ॥ २२ ॥**

संहत्येति। वर्षाणि रन्ध्रयमलै२९र्निहत्य रसरामै३६र्विभजेत्। तत्रावमा भवन्ति। तत्र शेषमेकत्र संरक्ष्य पुनर्वर्षाण्यग्निवेदैर्गुणयित्वा तेषु पूर्वस्थापितं हृतशेषं सहस्रद्वितयेन२००० हतं प्रक्षिप्य खव्योमवह्निमुनिभि७२०००र्हरेत्। तत्र लब्धा अप्यवमा भवन्ति। एतत्फलद्वययोग इहावम इत्युच्यते। पुनरत्र हृतशेषं भूतयमरुद्रै११२५र्हरेत्। तत्र लब्धा

अवमपातादतीता दिवसा भवन्ति ॥ २२ ॥

एषां संका( स्का )रमाह—

तेभ्योऽधिकाह्नान्प्रविशोध्य शेषं
वातारदातो ह्यवमस्य कालम् ।
यदा न शुध्येदपमं प्रगृह्य
दत्त्वा चतुष्षष्टितमो विशोध्यः ॥ २३ ॥

तेभ्योऽधिकाह्नानिति । तेभ्योय(ऽव)मपतनोत्तरदिनेभ्यो भूतयमरुद्रसिद्धेभ्यो २४११२५ऽधिकाह्नान्परिशोधयेत् । यदा ते न शुध्येयुस्तदाऽवमदिनेभ्य एकमवमं गृहीत्वा तं चतुःषष्ट्या ६४ निहत्य भूतयमरुद्रसिद्धेषु २४११२५ तेषु दिनेषु क्षिप्ता( प्त्वाऽ )धिकाह्नान् विशोधयेत् । तत्र यः शेषः स इह कर्मयोग्यः स्फुटोपमस्य पातादतीतः कालो भवति ॥ २३ ॥

अब्दाधिपावगमनायाऽऽह—

मासाधिमासकगणा गिरिभागशेषा-
स्त्रिंशद्गुणादपचयोऽयमुदीर्यतेऽतः ।
शैलावशिष्टकलियातमिषुप्रणिघ्नं
संयोज्य हीनदिवसेषु नगावशेषम् ॥ २४ ॥
एकयुक्तदिवसेषु वर्षपः
कीर्तितः स्थितखगादितायदा ।
हीनरात्रिगतयुक्तवासरा-
द्वेदवृन्दविहृतास्तदाऽप( व )माः ॥ २५ ॥

मासाधिमासकेति । अतीतसौरमासानधिमासयुक्तान् सप्तभि ७र्विभज्य शिष्टं विंशत्या २० निहत्यैकत्र संस्थाप्य पुनरतीतवर्षाणि सप्तभि७र्विभज्य शिष्टं पञ्चभि५र्निहत्य पूर्वानीतावमदिनेषु प्रक्षिप्य सप्तभि७र्विभज्य शिष्टं पूर्वस्थापिता-त्रिंशद्३०गुणितदिवसगणाद्विशोध्य शिष्टे सप्तभि७र्हृत एकयुक्ते शुक्रवारादि-र्वर्षाधिपो भवति । वर्तमानवर्षेऽवमपातिज्ञानायाऽऽह—हीनरात्रेति । वर्तमानवर्षे चैत्रादितिथिसमूहं तेभ्योऽधिकाह्नानित्यादिना साधितेष्ववमपातोत्तरदिनेषु प्रक्षिप्य वेदानां घनेन च चतुःषष्ट्या विभज्य लब्धा वर्तमानाब्दे अतीता अवमा भवन्ति ॥ २४ ॥ २५ ॥

अथ वक्ष्यमाणमध्यमानयनसाधनभूतस्य शोध्यराशेरानयनमाह—

वर्षेषु रन्ध्रकृतचन्द्रसमाहतेषु
षट्सप्तपञ्चविहृतेषु दिनादिलाभः ।
ते योजिता दशहतासु समाससंज्ञां
संप्राप्नुवन्ति रविजा इति निश्चलो(यो) मे ॥ २६ ॥
रविजदिवसयोज्याश्चाप(व)मा येऽत्र लब्धाः
सततमधिकमासाञ्शोधयेत्त्वाग्निनिघ्नान् ।
भवति यदवशिष्टं शोधनीयं समायां
यदि तदधिकशुद्धं क्षेप्यमेवोपदिष्टम् ॥ २७ ॥

वर्षेष्विति 'अतीतवर्षाणि रन्ध्रकृतचन्द्रै १४९ र्निहत्य षट्सप्तपञ्चभि ५७६-र्विभजेत् । तत्र लब्धं दिनं भवति । शेषात्षष्टिघ्नात्तेनैव हारेण नाड्याद-यश्च साध्याः । ते दिवसा दशाहतैरतीतवर्षैर्योज्यास्तदा रविजदिवसा भव-न्ति । तेषु पूर्वानीतानवमदिवसान्प्रक्षिप्य तेभ्यः पूर्वानीतानधिमासांस्त्रिशद्गुणि-तान्विशोधयेत् । तत्र शिष्टं शोधनीयं नाम राशिर्भवति । वक्ष्यमाणावमहीन-मधुसितादिवसादिकदिनगणनाच्छो(ध्य)मित्यर्थः । यदि तदधिकशुद्धं क्षेप्यमेवो-पदिष्टमिति । यद्यवमरहितरविजदिवसेभ्यस्त्रिंशद्गुणिताधिमासानामाधिक्याद-शोध्यत्वं भवति । तत्राधिकादल्पं विशोध्य शिष्टं क्षेप्यराशिहिभ(शिर्भ)वति । पूर्वोक्तदिनगणे क्षेप्यं भवतीत्यर्थः ॥ २६ ॥ २७ ॥

अथ मध्यमानयनसाधनभूतं ग्रहतनुस्वरूपमाह–

षष्टिशतत्रयनिघ्नो वर्षगणो ग्रहतनुः सदा कथितः ।
तेन समेता विहगा ध्रुवका इति कीर्तिताः सद्भिः ॥२८॥

षष्टीति । षष्टिशतत्रय ३६० निघ्नोऽतीतवर्षगणो ग्रहतनुर्भवति । ग्रहतनोरेकदेश इत्यर्थः । तेन समेता विहगा इति । तेन ग्रहतनुराशिना समेता रविबुध-भृग्वाख्या अंशीकृता ध्रुवका भवन्ति ध्रुवकसंस्थिताश्च भवन्तीत्यर्थः । षष्टि-शतत्रय ३६० निघ्नवर्षग्रगणयुतो भागीकृतस्तत्कालरविश्चन्द्रादीनामानयने ग्रहतनुर्भवति । इत्यु(क्तं) भवति । रविमध्यमानयने तु मधुस(सि)तदिवसा-दिको दिनगणोऽयमहीनः शोधनीयो विशुद्धो ग्रहतनुर्भवति ॥ २८ ॥

दिनाधिपत्यवगमनायाऽऽह–

मधुसितदिवसाद्यो हीनहीनो गणोऽङ्कां
– द्विचरहृतशिष्टो वारमासाब्दवा(पा)दिः ।

तत इदमपि शोध्यं शोधनीयं समायां
पतितसमतिरिक्तो गृह्यते नापरोऽत्र ॥ २९ ॥

मधुसितेति । चैत्रशुक्लप्रतिपदाद्यतीततिथिगणेऽवमहीने सप्तभिर्हृते शेषाद्बुधाधिपादिवारो भवति । तत इदमिति । इष्टवारगताद्दिवसगणादवमहीनादिदं शोधनीयाख्यं दिनादिकं शोधयेत् । अत्र शोधनीयशोधनेऽवमहीन एव दिनगणो गृह्यते न तु सप्तहृतावशिष्टः ॥ २९ ॥

+रविमध्यमानयनमाह—

सप्तत्या दिवसाद्याः शरभागा द्विगुणिता विघटकाश्च ।
तद्रहितो ग्रहदेहो रविबुधभृगवश्च निर्दिष्टाः ॥ ३० ॥

सप्तत्येति । शोधनीयविशुद्धादहर्गणाद् ग्रहदेहाख्यात्सप्तत्या दिवसादिफलं भवति । पुनरपि तस्मादहर्गणाद्द्विगुणितात्पञ्चभिः ५ र्विनाड्यो भवन्ति । एतद्द्वयं ग्रहदेहाख्यादहर्गणाद्विशोधयेत् । तत्र शिष्टं रविमध्यमो भवति । अर्कोऽयं नातिसूक्ष्मः । एतस्मिन्वर्षे नातीवान्तं भवतीति भावः । अयमेव बुधमध्यमो भृगुमध्यमश्च भवति ॥ ३० ॥

चन्द्रमध्यमानयनमाह—

कुमुदवनसुबन्धो रन्ध्रवर्गो द्वियुक्तः
ग्रहतनुगुणकारो भागहारः प्रदिष्टः ।
शरयमयमलाख्यो भागपूर्वोऽत्र लाभो
घुण( घुय )मविशिखनिघ्नो वेन्द्रियाप्ता विलिप्ताः ॥३१॥

कुमुदवनेति । अतीतभगणः सह भागीकृतं तत्कालमध्यमरविं ग्रहदेहाख्यं [ त्र्य ]शीत्या निहत्य शरयमयमलै२२५र्विभजेत् । तत्र भागादिफलं भवति । पुनरपि ग्रहदेहमेकादशभिर्निहत्य पञ्चाशता ५० विभज्य लब्धा विलिप्ताः पूर्वफलाद्विशोध्य त्रयोदश१३हतं ग्रहतनुं प्रक्षिपेत् । स चन्द्रो भवति । त्रयोदशहृततनुप्रक्षेपणं वक्ष्यति ॥ ३१ ॥

चन्द्रपातानयनमाह—

भागाः खनिधनाशास्त्रिरुद्रगुणिते विलिप्तिका ज्ञेयाः ।
षड्भिः शतैर्विभक्ते विंशत्यंशो रवेश्च तमः ॥ ३२ ॥

भागा इति । ग्रहदेहाच्छून्यादियमलैर्भागा भवन्ति । पुनर्ग्रहदेहात्त्रिशशी-

---

+ब्राह्म. मध्यमा ४४ , ग्रहगणिता ० मध्यमा १५.

रूपहतात्षड्भिः शतैर्विलिप्ता भवन्ति । पुनर्ग्रहदेहाद् विंशत्यंशश्च ग्राह्यः । एतेषां त्रयाणां योगो राहुर्भवति ॥ ३२ ॥

÷चन्द्रतुङ्गानयनमाह-

अचलहतनवांशा लिप्तिका रुद्रनिघ्ने
गगनरसविभक्तैर्लिप्तिकास्तापि पूर्वाः ।
ग्रहतनुखयमांशास्तत्पराः शोधनीया
दशलवसमुपेतश्चन्द्रतुङ्गः स भानोः ॥ ३३ ॥

अचलेति । सप्तघ्नाद्ग्रहदेहान्नवभिर्लिप्ता भवन्ति । पुनः कीद्( एकाद)-शहताद्ग्रहदेहात्षष्ट्या विलिप्ता भवन्ति । तद्द्वयमेकीकृत्य तस्माद्ग्रहतनुं विंशत्या विभज्य लब्धास्तत्पराः संशोध्य ग्रहतनुदशांशं प्रक्षिपेत् । स चन्द्रतुङ्गो भवति । ३३ ॥

शुक्रशीघ्रोच्चानयनमाह-

भूभृद्रामहतां हरेच्छरगुणै रन्ध्रैर्ग्रहाणां तनुं
भागाद्यस्थजितोऽपि भौरिकगणा भागे शतेनोद्धृते ।
रामांशेन युतं रवेश्च सकलं द्विघ्नाद्रवेः शोधये-
त्क्षेपः सोमजसोमयोः कृतगुणः सूर्योऽथ विश्वाहतः ॥३४

भूभृदिति । सप्तत्रिंशद्गुणिताद्ग्रहदेहान्नवभिः शतैर्भागाद्या भवन्ति । पुनर्भागात्मके ग्रहदेहे शतेनोद्धृते विलिप्ता भवन्ति । ग्रहदेहत्र्यंशं च गृहीत्वा तत्सकलं द्विघ्नाद्रवः( वेः ) शोधयेत् । शेषं शुक्रस्य शीघ्रोच्चं भवति । क्षेप इति वक्ष्यमाणबुधशीघ्रोच्चे चतुर्गुणः सूर्यः प्रक्षेप्यः । पूर्वोक्ते चन्द्रे त्रयोदशहतः सूर्यः प्रक्षेप्यः ॥ ३४ ॥

बुधशीघ्रोच्चानयनमाह-

व्योमशून्यनेत्रभाजिते फलं
राशयोऽष्टभाजितेऽथ लिप्तिकां विदुः ।
बिन्दुषड्ढते विलिप्तिकाद्विदः
सर्वमेव योज्यते गणयते बुधः ॥ ३५ ॥

व्योमशून्येति । ग्रहदेहोच्चैतद्द्वयेन राशयो भवन्ति । ग्रहदेहादष्टभिर्लिप्ताश्च भवन्ति । ग्रहदेहात्षष्ट्या विलिप्ताश्च भवन्ति । एतेषां योगे चतुर्गुणः सूर्यः प्रक्षेप्यः । एष बुधशीघ्रोच्चं भवति ॥ ३५ ॥

÷ब्राह्म० मध्यमा ४८

बिन्दुशून्यं मन्दमध्यमानयनमाह–

अष्टाहते शरयमाश्विहृते कलाः स्यु–
र्देहे तथा त्रिदशभक्तविलिप्तिकाश्च ।
युक्त्वैतदेवमुभयं शनिरत्र गण्या–
स्त्रिंशल्लवो रविभवो धनमत्र कार्यम् ॥ ३६ ॥

अष्टाहत इति । अष्टाहताद् ग्रहदेहाच्च(च्छ)रयमाश्विभिः२२ कला भवन्ति । पुनर्ग्रहदेहाच्च(च्छ)तत्त्रयेण विलिप्ताश्च भवन्ति । एतत्फलद्वययोगे ग्रहदेहस्य त्रिंशांशः प्रक्षेप्यः स शनिर्भवति ॥ ३६ ॥

*कुजमध्यमानयनमाह–

द्विकनिघ्ने ग्रहदेहे स्वविंशद्भागरहिते च लिप्ताद्याः ।
पञ्चाशद्दशविकलाः क्षेप्या भौमो रवेरर्धे ॥ ३७ ॥

द्विकनिघ्न इति । द्विघ्नो ग्रहदेहो लिप्ता भवन्ति । पुनर्द्विघ्नाद्ग्रहदेहाद्विंशत्या लब्धा लिप्तास्ताभ्यो लिप्ताभ्यः शोध्याः । पुनर्ग्रहदेहात्पञ्चाशताऽपि कलाश्च भवन्ति । एतत्फलद्वयं ग्रहदेहस्यार्धे क्षेप्यं स भौमो भवति ॥ ३७ ॥

गुरुमध्यमानयनमाह–

द्वियमघ्ने ग्रहदेहे शरनगरामोद्धृते तु लिप्ताद्याः ।
सुरनाथगुरोर्भोगो रविभोगद्वादशांशयुतः ॥ ३८ ॥

द्वियमघ्न इति । द्वियम२२घ्नाद् ग्रहदेहाच्छरनगरामैर्लिप्ता भवन्ति । तस्मिन् ग्रहदेहाद्द्वादशांशं१२ प्रक्षिपेत् । स गुरुर्भवति ॥ ३८ ॥

×चन्द्रोच्चपातयोर्ध्रुवमहर्गणे रूपक्षेपं चाऽऽह–

राशित्रयं क्षिप निशाकरतुङ्गमध्ये
वा तन्निपात्य भगणात्क्षिप राशिषट्कम् ।
त्रैराशिकागतदिनेषु च रूपमेकं
व्यावर्णयन्ति गणका भटशास्त्रचिन्ताः ॥ ३९ ॥

राशित्रयमिति । तुङ्गे राशित्रयं क्षेप्यं राहुं भगणाद्विशोध्य राशिषट्कं प्रक्षेप्यम् । एतदनयोः सर्वदा कार्यम् । त्रैराशिकानीतेऽहर्गणे कदाचिद्रूपं क्षेप्यम् । राहुं भगणाद्विशोध्य राशिषट्कं प्रक्षेप्यम् । एतदनयोः सर्वदा कार्यम् । त्रैराशिकानीतेऽहर्गणे कदाचिद्रूपं प्रक्षिप्येष्टवारः साध्यः ॥ ३९ ॥

---

*लघुमानसम्. मध्यमा. ८ ×ब्राह्म. मध्यमा. ४८

अथ कुट्टाकारविधिः । तत्र हारभाज्ययोरपवर्तनमाह—

भूदिनेष्टगणान्योन्यभक्तशेषेण भाजितौ ।
हारभाज्यौ दृढौ स्यातां कुट्टाकारं तयोर्विदुः ॥४०॥

क्ष्मा(भू)दिनेति । युगभूदिनं विन्यस्य तस्योपरीष्टग्रहस्य युगभगणं च विन्यस्य परस्परं विभजेत् । प्रथमं भगणेन भूदिनं हरेत् । पुनर्हृतशेषेण भगणं पुनस्तच्छेषेण भूदिनशेषम् । एवं भूयोऽपि परस्परं हरेत् । तत्रान्ते यो राशिरवशिष्यते तेन शेषेण भूदिनं भगणं च हरेत् । तत्र लब्धौ दृढहारो दृढभाज्यश्च भवतः । एवमुपपत्तीन्त( तित )योर्हारभाज्ययोः सतोः कु[ट्टा]कारकर्म क्रियते ॥ ४० ॥

अथ तत्कर्मक्रममाह—

भाज्यं न्यसेदुपरि हारमधश्च तस्य
खण्डयात्परस्परमधो विनिधाय वल्ल्यः ।
केनाऽऽहतोऽर्धमपनयि यथाऽस्य शेषं
भागं ददाति परिशुद्धमिति प्रचिन्त्य ॥ ४१ ॥
आप्तां मतिं तां विनिधाय वल्ल्या
नित्यं ह्यधोऽधः क्रमशश्च लब्धम् ।
मत्याहतं स्यादुपरि स्थितं य-
ल्लब्धेन युक्तं परतश्च तद्वत् ॥ ४२ ॥
हारेण भाज्यो विधिनोपरिस्थो
भाज्येन नित्यं तदधःस्थितश्च ।
अहर्गणोऽस्मिन्भगणादयश्च
तष्ट्वा भवेदस्य समीहितं च ॥ ४३ ॥

भाज्यं न्यसेदिति । उपरि स्थाने दृढभाज्यं न्यस्य तस्याधो दृढहारं च विन्यस्य पूर्ववत्परस्परं विभजेत् । तत्र लब्धं फलं चाधोऽधः क्रमेण वल्लीरूपेण स्थापयेत् । यावद्विभक्ते शेषयोरल्पत्वं मतिकल्पना च सुकरा भवति तावदेवं परस्परं विभज्य तत्तत्फलं चाधोऽधः क्रमेण विन्यसेत् । तत्र भाज्यशेषे हारशेषादल्पे सति यत्संख्यया गुणिते...भवति तया संख्यया भाज्यशेषं निहत्य भगणादिशेषं तस्माद्विशोध्य हारशेषेण हरेत् । तत्र लब्धं निःशेषं फलं भवति । प्रतिभाति संख्यया स्वोर्ध्वे गतं स्थानं निहत्य तस्मिन्नन्त्यगतं लब्धं विनिक्षिपेत् ।

पुनरपि शिष्टपदानामुपान्त्ये स्वोर्ध्वं निहत्य तस्मिन्नन्त्यं प्रक्षिपेत्। एवं पुनः पुनः कुर्यात्। यावद्द्वावेव राशी भवतः। तत्र तयोरुपरिस्थं राशिं दृढहारेण सहाधःस्थितं दृढभाज्येन हरेत्। उभयत्र शिष्टं ग्राह्यम्। तत्रोपरिस्थो द्युगणो भवति। अधःस्थितं तस्माद्द्युगणाल्लब्धं भगणादि भवति। भगणशेषः पूर्वं शुद्धश्चेद् भगणो राश्यादिः शेषः शुद्धश्चेद् राश्यादिरित्यर्थः। तदुक्तं—यद्वा भवेद्यस्य समीहितं यदिति। तथाऽहर्गणश्च घटिकारूपः कदाचिदुद्देशकवचनवशाद् भवति॥ ४१ ॥ ४२ ॥ ४३ ॥

रूपं शेषं प्रकल्प्य च कुट्टाकारकर्म कार्यमित्याह—

**रूपमेकमणस्यापि कुट्टाकारः प्रसाध्यते।**
**गुणकारोऽथ लब्धं च राशी स्यातामुपर्यधः॥ ४४ ॥**

रूपमेकमिति। भगणादिशेषमेकमिति प्रकल्प्यैतद्वशाद् मतिं च प्रकल्प्य पूर्ववदहर्गणं भगणादिं चाऽऽनयेत्। पुनस्तेनाहर्गणेनाभीष्टशेषं निहत्य दृढहारेण हरेत्। तत्र शिष्टमिष्टाहर्गणो भवति। तथा तत्र लब्धं भगणादिसंज्ञितं चाभीष्टशेषेण निहत्य दृढभाज्येन हरेत्। तत्र लब्धमभीष्टभगणादिर्भवति॥ ४४ ॥

उद्दिष्टराश्यादिमानाद्भगणशेषानयनमाह—

**इष्टेन शेषमभिहत्य भजेद्दृढाभ्यां**
**शेषं दिनादि भगणादि च कीर्त्यतेऽत्र।**
**राश्यादयो निरपवार्जि( र्ति )तवासरघ्ना**
**राश्यादिमानभजितां प्रवदन्ति शेषम्॥ ४५ ॥**

राश्यादय इति। राशिरुद्दिष्टश्चेत्तं राशिं दृढवासरेण निहत्य द्वादशभिर्विभजेत्। तत्र लब्धं भगणशेषो भवति। राशिभागश्चोद्दिष्टश्चेद्राशीं भागीकृत्य दृढहारेण निहत्य चक्रांशैर्विभजेत्। तत्र लब्धं भगणशेषो भवति। राशयो भागा लिप्ताश्चोद्दिष्टाश्चेत्सर्वं लिप्तीकृत्य दृढहारेण निहत्य चक्रलिप्ताभिर्विभजेत्। तत्र लब्धं भगणशेषो भवति। एवमन्यत्राप्यूह्यम्। अत्रोद्देशकः—

मध्यं रवेर्मृगपतौ धनुरंशकार्धे
दृष्टं मया दिनकरोदयकालजातम्।
आगणयतां दिनगणो भटतन्त्रसिद्धो
याताश्च तस्य भगणाः कलियातसिद्धाः॥

अत्र राशयश्चत्वारः। भागा अष्टाविंशतिः २८। लिप्ता विंशतिः२०। एतत्सर्वं कलीकृत्य दृढवासरेण निहत्य चक्रलिप्ताभिर्विभजेत्। तत्र लब्धं भगणशेषो भवति। ते च वस्वष्टरसाङ्कवसवः ८६६८८। एतस्य भगणशेषत्वात्। दृढभगणमुपरि न्यस्य परस्परहरणेन वल्लीमुत्पाद्य भगणशेषवशान्मतिं च प्रकल्प्योक्तविधिना द्युगणं भगणाख्यं च लब्धं चाऽऽनयेत्। पञ्चवेदत्रिपञ्चाभ्रशशाङ्क१०५३४५तुल्यो द्युगणः। तत्राऽऽनीतभगणानिव स्पष्टयमलतुल्यानि। अत्र रूपापचयेऽहर्गणद्स्रखाङ्काब्धिरन्ध्र९४६०२तुल्यः। तत्र लब्धं रन्धेषुनेत्र२५९तुल्यः ॥ ४५ ॥

यत्र राश्यादिमानाभ्यस्तो भाज्यो दृढवासराद्धिको भवति तत्र विशेषमाह—

भाज्योऽधिको यदि भवेत्खलु हारराशे-
स्तत्राधिकं समपनीय तथैव कर्म।
तेनाधिकेन गुणितो गुणकारराशि-
र्युक्तोऽधरेण स भवेत्पृथगत्र लब्धम् ॥ ४६ ॥

भाज्योऽधिक इति। दृढवासराख्याद्धारकाल्लिप्ताद्यात्मके भाज्येऽधिके सति प्रथमं हारेण लिप्ताद्यात्मकं भाज्यं हत्वा जातं फलमेकत्र संलक्ष्य पुनर्भाज्यशेषमुपरि न्यस्य तदधो हारं च विन्यस्य पूर्ववत्परस्परहरणं कृत्वा वल्लीं संस्थाप्य मतिं च लब्धं च तदधो विन्यसेत्। पुनरुपान्त्यहननादि कृत्वा राशिद्वयमानीय तयोरुपरि पूर्वमन्यत्र स्थापितं प्रथमफलं विन्यसेत्। तेषु त्रिषु राशिषूपान्त्येन स्वोर्ध्वं(र्ध्वं) निहत्य तस्मिन्नन्त्यं प्रक्षिपेत्। तत्रोर्ध्वगतं लिप्ताद्यात्मकेन भाज्येन हरेत्। तत्र शेषं लिप्ताद्यात्मकं फलं भवति। अधःस्थितं दृढहारेण हरेत्। तत्र शिष्टमहर्गणो भवति। एवं भाज्याधिके विशेषः। उद्देशकः—

नीता रवेर्बलवता मरुता समस्त—
राश्यादयोऽत्र गणिताः सह तत्पराभिः।
शेषो मया परिगतः खलु तत्पराणां
सैकं शतं कथय भानुमहर्गणं च ॥

अत्र तत्पराः शेषस्य उद्दिष्टत्वात्तत्परीकृतदृढभगणो भाज्यः। दृढवासरो हारः। तत्र भाज्यस्याधिकसंख्यत्वात्। प्रथमं भाज्यं दृढहारेण

विभज्य तत्र लब्धं फलमेकत्र निधाय पुनर्भाज्यशेषं दृढहारयोः परस्पर-हरणेन वल्लीमुत्पाद्य मतिं लब्धं च संपाद्य पुनरुपान्त्यगुणमा(ना)दि कृत्वा राशिद्वयमुत्पाद्य तयोरुपरि प्रथमहरणेन लब्धं फलं व्योमाद्रचष्टयमै-कयमलैः२१२८७०संकृत्वा( स्कृत्य ) राशीनामुपान्त्येन स्वोर्ध्वं निहत्य तस्मिन्नन्त्यं प्रक्षिपेत् । तत्रोपरिस्थितं तत्परीकृतभाज्याख्यं विन्यस्य तेषां त्रयाणां रा.........न हरेत् । शेषस्तत्परीकृतः सूर्यः स्यात् । अधि(धः)-स्थितं दृढहारेण हरेत् । तत्र शेषो भगणः । तत्रैकाब्ध्येकरसव्यो-मचन्द्र१०६१४१तुल्यो द्युगणः । एकरन्ध्रेषुखाष्टनिषनवेषुयमाद्रक९२२९५-८०१९१तुल्यो रविः। एकावाये तु(?)काङ्गद्व्यष्टगाब्ध्यब्धिचन्द्रतुल्यो द्युगणः । एकनवाब्ध्येकागाङ्गद्व्यष्टखाग्नि३०८२६७१४९१तुल्यं फलम् ॥ ४६ ॥

*अथ वारकुट्टाकारे विशेषमाह—

अपवर्तितवासरादिशेषा-
त्क्रमशस्तानपनीय रूपपूर्वम् ।
कृतकुट्टनलब्धराशिमेषां
गुणकारं समुशन्ति वारहेतोः ॥ ४७ ॥

अपवर्तितेति । दृढवासरं स्व( स )प्तभिर्विभज्य तत्र शिष्टभाज्यं प्रकल्प्य हारसप्तसप्तसंख्यं प्रकल्प्य दृष्टवारसंख्याहीनामिष्टवारसंख्यां शोध्यं प्रकल्प्य पूर्ववत्कुट्टनकर्माणि कृते यो राशिरहर्गणत्वेन सिद्धो भवति तेन गुणितं दृढवासरं भूताहर्गणे प्रक्षिपेत् । स इष्टवारेऽहर्गणो भवति । अत्र वल्ल्या अभावे मतिरेव द्युगणराशिर्भवति । उद्देशकः—

धन्वन्यंशाः शरकृतिसमाः षट्कृतिर्मौरिकाणां
भानोर्मध्यं दश च विकलासंयुतं वर्णयन्ति ।
रात्रेः पातुस्तनुजदिवसे केन कालेन तुल्यो
भावी सूर्यः कथय विशदं जीवशुक्रज्ञवारे ॥

अत्र भानो राश्यादिकं लिप्तीकृत्य दृढवासरेण सावयवं निहत्य चक्रक-लाभिर्विभज्य भगणशेषमानीय तेन दृढवासरभाज्यां च कुट्टाकारकर्म कुर्यात् ।

*कुट्टाकारशिरोमणिः निरग्रपरिच्छेदः श्लो० ६५–७१

तत्र लब्धोऽहर्गणः सहस्रसंख्यः। अस्मिन्नहर्गणे बुधवारः। अतो जीवादिवासरार्थमेकं शोध्यम्। दृढवासरे सप्तभिर्भक्ते चत्वारो लब्धाः। अतश्चतुःसंख्यो भाज्यः। सप्तसंख्यो हारः। एतैः कुट्टनकर्मणि कृते द्विसंज्ञो राशिर्लभ्यते। तेन द्विसंख्येन गुणितं दृढवासरं पूर्वानीक(त)बुधवासरद्युगणे प्रक्षिपेत्। तदा जीववारेऽहर्गणो भवति। शुक्रवारविशुध्यं तु द्विसंख्यः शोध्यराशिः। ऊर्ध्वंबुधवारसिद्धयर्थं सप्तसंख्यः शोध्यराशिः। अन्यत्पूर्ववत्॥ ४७॥

:-अथ वेलाकुट्टाकारे विशेषमाह—

छेदभाज्यापवर्तेन यच्छेदस्यातिरिच्यते।
तेन हारं समभ्यस्य वेलाकुट्टस्तु पूर्ववत्॥ ४८॥
प्रक्षिप्य भागहारं कुट्टाकारे पुनः पुनः प्राज्ञैः।
योज्यं च भागलब्धं भाज्ये प्रस्तारयुक्त्यैव॥ ४९॥

छेदेति। उदयादन्यकालजो ग्रहो यदोद्दिष्टो भवति, तत्र वेलाकुट्टाकार्यः। तत्र दिनांशस्य यच्छेद एतावत्यां नाडयामेवं ग्रह इत्युक्ते नाडिकांशस्य च्छेदः षष्टिसंख्यः। एतावति यामे गत एवमित्युक्ते यामस्य दिनाष्टांशत्वादष्टसंख्यश्छेदः। एवमन्यत्रापि कल्प्यम्। अत्र नाडिकायामुद्दिष्टत्वात्षष्टीसंज्ञो(ष्टिसंख्यो) दिनांशच्छेदः। तं षष्टी(ष्टि)संज्ञ(ख्यं) दिनांशच्छेदं दृढभाज्यं च परस्परं हत्वा तत्र शिष्टेन द्वादशसंख्यौ तौ दिनांशच्छेदभाज्यौ हर्तव्यौ। तत्राष्टाचत्वारिंशत्संख्यो भाज्यः। पञ्चसंख्यो भाज्यः। पञ्चसंख्यो दिनांशच्छेदः। सोऽत्र च्छेदातिरिक्त इत्युच्यते। तेन दृढहारं गुणयेत्। सोऽत्र हारः स्यात्। तथा तेन लिप्ताशेषोऽपि हन्तव्यः। सोऽत्र शेषः। अष्टाचत्वारिंशत्संख्यो भाज्यः। अत्र लिप्ताशेषस्योद्दिष्टत्वात्। भाज्योऽपि लिप्तीकृतो ग्राह्यः। तत्र भाज्यहारयोः पुनरप्यपवर्तनसंभवात्। तौ पञ्चभिर्भक्त(क्त)व्यौ। तत्र भाज्यः पञ्च५हतः शून्यरसाग्निसप्तयम९२७३६०संख्यः। हारो नवाष्टाग्निशून्यैकयम९२१०३८९संख्यशेषः। पूर्वगुणेन गुणित उत्तरहारेण हृतश्च प्राग्वदेकसप्तति७१संख्य एव। एतैः पूर्ववदहर्गणरवी साध्यौ। न तत्र घटीभूतोऽहर्गणो

---

+कुट्टाकारशिरोमणिः निरग्रपरिच्छेदः श्लो० ६५-७१

रामखाक्ष्यग्निसागर४३२०३तुल्यः । लिप्तीकृतो रविरेकाष्टीष्वक्षिसागर४२-५१६११२तुल्यः । अत्र लब्धेऽहर्गणे भगणाद्यात्मके फले च स्वस्वहारं यथेष्टगुणं प्रक्षिप्योद्देशकोक्ताहर्गणभगणाद्याः साध्याः । यावत्प्रक्षिप्ते मया दृष्टोऽयमित्युद्देशको ब्रवीति तावत्स्वस्वहारं प्रक्षिपेदित्यर्थः । प्रस्तारयुक्त्या यत्संख्यागुणितो हारोऽहर्गणे प्रक्षिप्यते तत्संख्यागुणित एव हारः फले च प्रक्षेप्य इत्यर्थः ॥ ४८ ॥ ४९ ॥

गन्तव्य उद्दिष्टे तत्र विशेषमाह—

**गन्तव्यमिष्टं यदि कस्यचित्स्या-**
**द्गन्तव्ययोगादिदमेव कर्म ।**
**रूपेण वा योऽन्यविधिर्विचिन्त्य**
**सर्वं समानं खलु लक्षणेन ॥ ५० ॥**

गन्तव्यमिति । गन्तव्य उद्दिष्टे सति भगणादेर्गतव्यं शेषं प्रकल्प्य पूर्ववद्वल्लीमुत्पाद्य तत्र भाज्यशेषे यत्संख्यया गुणिते गन्तव्यशेषं तस्मिन्प्रक्षिप्य हारशेषेण भक्ते विशेषं फलं भवति तत्संख्यां मतिं प्रकल्प्य तत्राऽऽप्तं लब्धं च प्रकल्प्य पूर्ववत्कुट्टाकारकर्म कृत्वाऽहर्गणं फलं चाऽऽनयेत् । तत्र फलमेकहीनं स्फुटं भवति । अन्यत्सर्वं पूर्ववदेव । उद्देशकः—

गन्तव्यं रविणाऽष्टमस्य भवनस्याऽऽहुः का(क)लानां शतं
संचिन्त्याऽऽशु पदात्मकस्य गणितं ज्ञातं त्वया चेदिह ।
यावन्त्यत्र कलेर्गतानि मतिमन्सर्वाणि वर्षाणि मे
त्वंहां(त्वह्नां) यश्च गणः स चैव विशदं वाच्यः कलेर्यो गतः ॥

अत्र पूर्ववदानीतं मण्डलं गन्तव्यं वेदव्योमशशाङ्कैकाद्रि७११०४-तुल्यम् । अत्र लब्धोऽहर्गणो नवाष्टवसुरसाष्टैकसंख्यो भगणो द्व्येकैकेषु५११२संख्यः । तत्रैकहीनो भगणो गतभगणः स्यात् । अत्रापि पूर्ववद्रूपसंख्यं क्षेप्यं प्रकल्प्य राशिद्वयमानीय पुनरिष्टगन्तव्यशेषेण निहत्य स्वस्वहारेण विभज्य शेषौ वाऽहर्गणभगणौ भवतः । तदुक्तं रूपेण वेति ॥ ५० ॥

ग्रहयोगे तदन्तरे वोद्दिष्टविशेषमाह—

**योगेषु तेषां भगणादियोगै-**
**र्विशेषितैर्वाऽपि तथा विशेषे ।**

अन्योऽन्यशेषादपि चिन्तनीय-
मिष्टग्रहस्पष्टगणैर्विधानम् ॥ ५१ ॥

इति महाभास्करीये कर्मनिबन्धे प्रथमोऽध्यायः ॥ १ ॥

---

योगेषु तेषामिति । यत्र ग्रहयोर्ग्रहाणां वा योग उद्दिष्टस्तत्र तयोर्ग्रहयोस्तेषां वा भगणयोगो भाज्यः । भूदिवस एव हारः। भगणादिशेषयोगः शेषग्रहान(न्त)र उद्दिष्टे भग[णा]न्तरं भाज(ज्यं) भूदिवसो हारः कर्तव्यः । योग उद्देशकः—

पञ्चरूप्तनवभौमशशाङ्कौ राशिपूर्वगणितौ समवेतौ ।
उच्यतां दिनगमाशशिभौमौ कीदृशौ च भटतन्त्रविदाशु ॥

अत्र राशियोगः पञ्चसंख्यः । भागयोगः सप्तसंख्यः । लिप्तायोगोऽत्र भाज्यः । भूदिवसो हारः । ताभ्यामपवर्तिताभ्यामिह कर्म क्रियते । तत्र जातो द्विगुणशून्यरन्ध्रकृताद्रीषुचन्द्रव्योमेन्दु१०१५७४९०३२संख्यकः । अथ विशेष उद्देशकः—

भौमश(शु)क्रगुरुमध्यविशेषः पञ्चराशिगणितः परिपूर्णः ।
उच्यते दिनगणः कलियातो देवमन्त्रिरुधिरौ च कि(कि)यतौ(न्तौ) ॥

कुजजीवभगणोर्वि(णवि)शेषोऽत्र भाज्यः । भूदिवसो हारकः । ताभ्यामपवर्तिताभ्यामत्र कर्म कार्यम् । अत्र जातोऽहर्गणः षध्यो(पञ्चव्यो)मषट्त्रिरामेन्दुचन्द्र(११३३६०५)तुल्यः । अन्योन्यशेषादित्यादिना साग्रकुट्टाकारः सूचितः । अन्यथा(र्था)स्माच्छेषादिष्टग्रहाणां स्पष्टभगणैश्च कुट्टाकारविधानं चिन्तनीयमिति इह सूचितम् । स कुट्टाकारविधिर्गोविन्दस्वामिकृते भाष्ये द्रष्टव्यः । तद्भाष्यस्य व्याख्यायां तत्प्रयोगो मया व्याख्यातश्च ॥५१॥

इति परमेश्वरकृतायां कर्मदीपिकायां
प्रथमोऽध्यायः ॥ १ ॥

---

अथ देशान्तरविधिः । तत्र लङ्कामेर्वन्तरालगतमध्यरेखास्नि(स्थि)तानि कतिचित्पत्तनान्याह—

लङ्कातः खरनगरं सितोरुगेहं
वाणाटो मिसितपुरी तथातपर्णि ।

उत्तुङ्गः सितवरनामधेयशैलो
लक्ष्मीवित्पुरमपि खात्यगुल्मसंज्ञम् ॥ १ ॥
विख्याता वननगरी तथा ह्यवन्तिः
स्थानेशो मुदितजनस्तथा च मेरुः ।
निन्ध्या(विन्ध्या)ख्य[ः] करणविधिस्तु मध्यमाना-
मेतेषु प्रतिवसतां न विद्यते सः ॥ २ ॥

उत्तुङ्गत इति । एतेषु वसतां जनानां देशान्तराख्यं कर्म न भवति ॥१॥२॥

अथ कैश्चिदुदितं देशान्तरयोजनानयनोपायमक्षांशानित्यादिना प्रदर्श्या-ध्वानमित्यादिना तन्निराकरोति—

स्वाक्षांशा णि( नि )गदितवित्तनाशहीना-
त्संहन्यान्नवनवपक्षपुष्कराख्यैः ।
अष्टाभिः शरकृतिहीनभागसंख्यै-
श्चन्द्रांशैरपहृतयोजनानि कोटिः ॥ ३ ॥
कर्णाख्यः स्वविहितपत्तनान्तरद्धा
तिर्यक्स्थो जनव( प )दभाषितो जगत्याम् ।
तत्कृत्योर्विवरपदं वदन्ति केचि-
दध्वानं गणितस्य वेदितारम् ॥ ४ ॥

अक्षांशानिति । कस्मिन्समरेखागतपत्तनेऽक्षांशान् विदित्वा तदक्षांशस्व-देशाक्षांशयोर्विवरभागानानीय तैर्भूपरिधियोजनानि नवनवपक्षपुष्कराख्यतुल्या-नि निहत्य चक्रांशैः षष्ट्युत्तरशतत्रयैर्विभज्य लब्धं कोटिर्भवति । कोटियो-जनानीत्यर्थः। स्वदेशसमरेखागतपत्तनयोरन्तराले तिर्यग्गतानि जनपदभाषितानि जनपदभाषणासिद्धानि योजनानि कर्णो भवति । एतयोः कोटिकर्णयोर्वर्गान्तर-पदं देशान्तरयोजनानि भवन्ति । अत्रोक्तानि ÷भूपरिधियोजनानि योजनतः पञ्चविंशत्युत्तरशतद्वयांशैरष्टभिर्हीनानीत्याह—अष्टाभिरित्यादिना ॥३॥४॥

अस्य पक्षस्य दूषणमाह—

अध्वानं गणितविदो भटस्य शिष्याः
स्थूलत्वाच्छ्रवणविधेर्न सम्यगाहुः ।
अक्षादेरपि च विधेरथोपपत्ति-
र्वक्रत्वात्क्षितिपरिधेर्वदन्ति सन्तः ॥ ५ ॥

÷ग्रहगणित. मध्यमा. २, आर्यभटीयम्. गीतिका. ५, ब्राह्मस्फुट. तन्त्र. १५, गोला-ध्यायः भुवन. ५२, शिष्यधी. मध्यमा. ५६, सिद्धान्तशेखर. मध्यमा. १०१, १०५

अध्वानमित्यादिना । दूषणहेतुमाह—स्थूलत्वादित्यादिना । स्थूलत्वं जनपदभाषणमात्रसिद्धत्वात् ॥ ५ ॥

अथ मतान्तरं प्रदर्श्य तदपि निराकरोति—

**छायार्थस्फुटदिवसतिग्मरश्म्यो-**
**रध्वानं विवरकलाग्रमाहुरेके ।**
**नैतत्स्यात्समपरपूर्वदिक्स्थितानां**
**तुल्यत्वात्फलगणितस्य वर्णयन्ति ॥ ६ ॥**

छायाप्ते(र्थे)त्यादिना । मध्यच्छायया वक्ष्यमाणविधिना मध्याह्नेऽर्कमानीय पुनर्गणितविधिना च मध्याह्ने देशान्तरं विनाऽर्कमानयेत् । तयोर्यद्विवरंतलाग्रं विवरकलामानं तत्तद्देशान्तरमित्येक आहुः । तद्देशान्तरसाधनमित्यर्थः । तन्निराकरोति—नैतदित्यादिना । दूषणहेतुमाह—समपरेत्यादिना ॥ ६ ॥

अथ स्वमतमाह—

**सूर्येन्द्वोरकृतसमाध्वनोर्विधानात्**
**संप्राप्तः सति दलकालदृष्टयोश्च ।**
**विश्लेषः स्फुटतर उच्यतेऽत्र कालो**
**गोलोक्तैर्विदितभटप्रणीततन्त्रः ॥ ७ ॥**
**नित्यं वा शशिनमदेशकालसंख्यं**
**सूर्यश्च स्फुटमुदयास्तयङ्घ(तद्घ)टीभिः ।**
**कृत्वैव ज्वलविधिना घटीश्च बुद्ध्वा**
**तत्रस्य(स्थ)द्विपरमुशन्ति देशकालम् ॥ ८ ॥**

सूर्येन्द्वोरिति । अकृतदेशान्तरसंस्कारयोः सूर्येन्द्वोरन्तरकालेन तदुद्भवैरपक्रमविक्षेपादिसाधनैश्च ग्रहणारम्भकालमानीय पुनर्घटिकया छायया वा प्रत्यक्षारम्भकालं चाऽऽनयेत् । तयोर्विवरं +देशान्तरकालो भवति । अथवा नित्यं सर्वस्मिन्नप्यकृतदेशान्तरसंस्काराभ्यां सूर्यशशिभ्यां सूर्यास्तमयचन्द्रे सूर्यास्तमयचन्द्रसूर्यास्तमयचन्द्रास्तमययोर्वाऽन्तरकालं वक्ष्यमाणविधिनाऽऽनीय पुनर्घटिकास्थापनेन च तदन्तरकालमानयेत्। तत्र तयोर्विवरं तन्त्रज्ञा देशान्तरकालमिच्छन्ति। देशान्तरकालस्य साधनमित्यर्थः ॥ ७ ॥ ८ ॥

रेखायाः पूर्वपश्चिमविशेषज्ञानायाऽऽह—

+खण्डखाद्यके. तिथ्याधि. १३, ब्राह्म. मध्यमा. ३६–८, लघुमानसे प्रकीर्णा. ३ ग्रहगणिता. मध्यमा. ३, गोला. मध्यगति. २४–५, सूर्य. मध्यगति. ६३–५.

**ग्रहोदयो यदा पूर्वं स्पर्शश्चैवोपलक्ष्यते ।**
**पूर्वेण समरेखाया भ्रष्टा स्यात्पश्चिमेऽन्यथा ॥ ९ ॥**

ग्रहोदयो यदेति । अस्मिन्श्लोकेऽपपाठश्च दृश्यते । अत एवा(वं) पठितव्यम्—

ग्रहोदयो यदा पूर्वं स्पर्शा(र्शः) पश्चाच्च लक्ष्यते ।
पूर्वेण समरेखाया द्रष्टा स्यात्पश्चिमेऽन्यथा ॥ इति ।

यदा गणितसिद्धचन्द्रोदयकालात्प्रागेव प्रत्यक्षीकृतचन्द्रोदयो भवति तथा गणितसिद्धस्पर्शकालमतीत्य प्रत्यक्षीकृतस्पर्शश्च भवति तदा समरेखायाः पूर्वस्मिन्देशे स्थितो द्रष्टा भवति । अन्यथा पश्चिमे स्थितः स्यात्॥९॥

इदानीं देशान्तरकालेन ग्रहणसिद्धेन ग्रहणान्तरसंस्कारमाह—

**कालेनाऽऽहत्य भुक्तिं ग्रहरवितमसां देशजातेन नित्यं**
**षष्ट्या हृत्वाऽथ लब्ध्वा जलवसुरवयोर्दिग्गतानां धनर्णे ।**
**लम्बेनाभ्यस्य भूमेः सकलगुणहृतो वृत्तसंख्याघटीभि-**
**र्हत्वा देशान्तराभिर्गगनरसहृतो योजनाग्रं वदन्ति॥१०॥**

**इति महाभास्करीये द्वितीयोऽध्यायः । २ ॥**

---

कालेनाऽऽहत्येति । देशान्तरनाका(डी)भिर्ग्रहभुक्तिं निहत्य षष्ट्या विभज्य लब्धं तत्तद्ग्रहमध्यमे रेखायाः पश्चिमे धनं कुर्यात् । पूर्वस्मिन्देशे ऋणं कुर्यात् । लम्बेनाऽऽहत्येत्युत्तरार्धेन स्वदेशभूवृत्तानयनं तद्गतदेशान्तरयोजनानयनं चाऽऽह । लम्बेन भूवृत्तं निहत्य त्रिराशिज्यया विभजेत् । तत्र लब्धं स्वदेशभूवृत्तयोजनमानं भवति । तां वृत्तसंख्यां देशान्तरघटिकाभिर्निहत्य षष्ट्या विभजेत् । तत्र लब्धं देशान्तरयोजनसंख्या भवति ॥ १० ॥

**इति परमेश्वरकृतायां कर्मदीपिकायां**
**द्वितीयोऽध्यायः ॥ २ ॥**

---

अथ त्रिप्रश्नाध्याय उच्यते। तत्र स्थलस्य समीकरणं शङ्कुस्थापनप्रकारं चाऽऽह-

**अद्भिः समत्वमधिगम्य रसातलस्य**
**वृत्तं लिखेत्स्फुटतरं खलु कर्कटेन।**
**सूत्रैश्चतुर्भिरवलम्बनतन्निबद्धै-**
**र्ज्ञातार्जवोरु[समवृत्त?]गुरुर्नरः स्यात् ॥ १ ॥**

अद्भिरिति। स्थलमध्ये पतितं जलं सर्वदिक्षु समं गच्छति चेत्तत्स्थलं समं भवति। एवमद्भिः समत्वावगतिः। समे स्थल इष्टव्यासार्धप्रमाणेन कर्कटेन यन्त्रभेदेनेष्टवृत्तमालिखेत्। तन्मध्ये यथोक्तं शङ्कुं स्थापयेत्। शङ्कुलक्षणमाह-सूत्रैरित्यादिना। समवृत्तो गुरुर्मूलादग्रान्तं चतुर्दिक्षु सम्यक्प्रसारितैश्च सूभिरेखाभिराङ्कितो रेखास्थानबद्धैश्चतुर्भिरव[ल]म्बकसूत्रैर्ज्ञातार्जवस्थितिः शङ्कुर्भवति। *दिग्विभागार्ध(र्थं) तु तन्मस्तकमध्ये सूक्ष्माग्रा काचिच्छलाका संस्थाप्या। तदग्रसंभूतच्छायाग्रवशाद्दिग्भवति ॥ १ ॥

दिग्विभागमाह-

**छायाप्रवेशनिर्गमबिन्दुभ्यामिनमालिखेदव्यक्तम्।**
**तद्वृत्त(न्मत्स्य)पुच्छनिःसृतं सूत्रं याम्योत्तरं शङ्कोः ॥२॥**

छायाप्रवेशेति। प्राक्कपाले वृत्तमध्यस्थापितशङ्कोर्मस्तकमध्यस्थशलाकासंभूतच्छायाग्रस्य वृत्तपरिधेश्च योगो यत्र दृश्यते तत्र बिन्दुं कृत्वा पुनरपराह्णे च तच्छायाग्रवृत्तयोर्योगे बिन्दुं कुर्यात्। पुनस्तद्बिन्दुद्वयं मध्यं कृत्वैकेनैव ×कर्कटेन वृत्तद्वयमालिखेत्। यथा वृत्तत्रययोगेन मत्स्यं भवति। तन्मत्स्यमुखपुच्छनिर्गतं सूत्रं वृत्तपरिवृद्धय(ध्य)न्तं कुर्यात्। तत्सूत्रस्याग्रे शङ्कोर्याम्योत्तरे दिशौ भवतः ॥ २ ॥

अथ प्रकारान्तरेणाप्याह-

**बिन्दुभिस्त्रिभिरतुल्यकालजैः**
**संलिखेच्छफरिको विधानतः।**
**सूत्रयोर्मुखसमप्रयान्तयो-**
**र्योगतः कुजबुधाशयोर्विधिः ॥ ३ ॥**

---

* ग्रहग. त्रिप्रश्न. ८-९, सिद्धान्तशेखर. त्रिप्रश्न. २, ३, लघ्वार्य. त्रिप्रश्न. १, २, शिष्यधी. त्रिप्रश्न. १-३. ×आर्यभटीये. गणितपाद. १३, शिष्यधी. यन्त्रा. २.

बिन्दुभिरिति । इष्टकाले शङ्कोश्छायाग्रे बिन्दुं कृत्वा पुनः किंचित्काल-मतीत्य तत्कालच्छायाग्रेऽपि बिन्दुं कुर्यात् । तद्बिन्दुत्रयमध्यं कृत्वा वृत्तत्रय-मालिख्य ×मत्स्यद्वयमुत्पाद्य तन्मत्स्यद्वयमुखपुच्छनिर्गतसूत्रयोगो यत्र भवति, ततः शङ्कुमस्तकमपि दक्षिणोत्तरं सूत्रं वृत्तपरिध्यन्तं कुर्यात् । तदग्रे शङ्कोर्दक्षिणोत्तरदिशौ भवतः । अत्रोभयत्र शङ्कावुद्धृत एव हि दक्षि-णोत्तरसूत्रस्य संचारो भवति ॥ ३ ॥

अथ च्छायाकर्णाख्यस्य स्ववृत्तविष्कम्भार्धस्याऽऽनयनमाह—

**नृच्छायाकृतियोगस्य मूलमाहुर्मनीषिणः ।**
**विष्कम्भार्धा( र्धं )स्ववृत्तस्य च्छायाकर्मणि सर्वदा ॥ ४ ॥**

नृच्छायेति । शङ्कुच्छायावर्गयोर्योगस्य मूलं छायाकर्णो भवति । स एव स्ववृत्तविष्कम्भार्धमित्युच्यते । छायाकर्णसाधितवृत्तस्य विष्कम्भा-र्धमित्यर्थः । स्ववृत्तपरिकल्पनायाः प्रयोजनं गोलविद्भिर्वेद्यम् ॥ ४ ॥

अक्षावलम्बयोरानयनमाह—

**छायाहतं त्रिभुवनस्य गुणप्रतानं**
**हत्वा नरेण च पृथग्विभजेत्पदेन ।**
**अक्षावलम्बकगुणौ विषुवत्प्रसिद्धौ**
**छायानरौ च विपुलावपरत्र दृष्टौ ॥ ५ ॥**

छायाहतमिति । द्वादशाङ्गुलशङ्कोर्विषुवद्दिनमध्याह्नादन्यत्र यथे-ष्टकाले छायाशङ्कुतत्कर्णैरेवं साधितौ राशी तत्काले महाच्छायामहा-शङ्कू भवतः ॥ ५ ॥

अपक्रमाद्यानयनमाह—

**इष्टज्यां मुनिरन्ध्रपुष्करशशिक्षुण्णां सदा संहरेद्-**
**व्यासार्धेन भवेदपक्रमगुणस्तात्कालिकस्तत्कृतिम् ।**
**विष्कम्भार्धकृतेर्विशोध्य च पदाद्युव्यासखण्डं विदुः**
**स्वेष्टक्रान्तिहतं फलं प्रविभजेल्लम्बेन जीवा क्षितेः ॥ ६ ॥**
**व्यासखण्डगुणिता क्षितेर्गुणं संहरेद्द्युदलजीवया पुनः ।**
**काष्ठिकं च यदवाप्तमत्र तु प्रोच्यते चरदलं सतां वरैः ॥७॥**

---

× शिष्यधी. त्रिप्रश्न ३, सिद्धान्तशेखर. त्रिप्रश्न. ५.

इष्टज्यामिति । सायनस्य स्फुटरवेर्भुजज्यां मुनिरन्ध्रपुष्करशशी(शि)भिर्निहत्य त्रिराशिज्यया विभज्य लब्धमपक्रमज्या भवति । अपक्रमज्याकृतिं व्यासार्धवर्गाद्विशोध्य शिष्टस्य मूलं *स्वाहोरात्रार्धज्या भवति । इष्टकान्तिज्याहतां पलज्यां लम्बकेन विभज्य लब्धं क्षितिज्या भवति । क्षितिज्यां व्यासार्धहतां स्वाहोरात्रार्धज्यया विभजेत् । तत्र लब्धं चरदलज्या भवति । सा चापिता चरदलं प्राणीकृतं भवति ॥ ६ ॥ ७ ॥

चरानयने कर्मान्तरमाह–

जिना दशघ्ना कृतरन्ध्रभूमयो
नवाद्रि यस्ते गुणिता बलाङ्गुलैः ।
हृताश्चतुर्भिः क्रियगोनरान्तजा
भवन्ति निःश्वासलवा बलोद्भवाः ॥ ८ ॥

जिना दशघ्ना इति । अत्र शालीशब्देनैका संख्योच्यते । अथवा रन्ध्रभूमय इति पाठः । जिनादयस्त्रय(यः)संख्याभेदाः पलाङ्गुलहताश्चतुर्भिर्भक्ता मेषवृषभमिथुनानां च[र]दलासवो भवन्ति । एवमानीतचरदलासूनां स्थौल्यं स्यादिति गोलविद आहुः ॥ ८ ॥

लङ्कोदयप्रमाणानयनमाह–

शशिकृतशशिरामैराहता राशिजीवाः
स्वाधिदिवसगुणार्धैर्भाजिताः काष्ठिताश्च ।
पतितसमतिरिक्ताः पूर्वचापैरजाद्या
विषुवदुदयराशिप्राणपिण्डा भवन्ति ॥ ९ ॥

शशिकृतेति । एतद्द्वित्रिराशीनां जीवाः शशिकृतशशिरामैः पृथङ्निहत्य तत्तद्राशिज्यासिद्धस्वाहोरात्रार्धज्यया विभज्य लब्धं चापी कुर्यात् । पुनः प्रथमचापं द्वितीयचापाद्विशोध्य द्वितीयचापं तृतीयचापाद्विशोधयेत् । एवं कृते मेषवृषभमिथुनानां लङ्कोदयप्राणा भवन्ति ॥ ९ ॥

एवं सिद्धान्पठति–

खनगरसशशाङ्काः पञ्चरन्ध्राश्विरूपा
विषयशिखिनवैकास्ते च दृष्टा विधिज्ञैः ।
चरदलपरिहीना योजिता व्युत्क्रमेण
प्रतिविषयसमुत्थास्तूदया मेषपूर्वाः ॥१०॥

---

*गोला. त्रिप्रश्न. १–४६, ग्रहगणिते. स्पष्टा.४८सूर्य. स्फुट. ६१. सिद्धान्तशेखर. स्फुटा ६५, [illegible]. स्पष्टा. १६, शिष्यधी. स्पष्टा.१७,ब्राह्म. स्पष्टा.५७ [illegible]. त्रिप्रश्न. १

खनगरेति । एतैः स्वदेशराश्युदयप्राणानयनजा(मा)ह—प(च)रदलेति । मेष-वृषमिथुनानां लङ्कोदयासवः प्रथमद्वितीयतृतीयराशीनां चरदलासुभिर्हीनाः स्वदेशासवो भवन्ति । पुनर्व्युत्क्रमेण चरदलयुता मिथुनवृषमेषाणां लङ्कोदयास्तृतीयद्वितीयप्रथमराशीनां चरदलेन युताः कर्कटकासिंहकन्याराशीनां स्वदेशोदया भवन्ति । व्युत्क्रमेणेत्येतत्पदमुत्तरत्र च संबध्यते । अथवोत्तरत्रैवास्य संबन्धः : मेषादीनां षण्णामेवमुक्ता उदयासवो मीनादीनां षण्णां व्युत्क्रमेण भवन्ति ॥ १० ॥

मध्याह्नच्छायानयनमाह—

> अप(व)गम(त)व(फ)लभागा मेषजूकादिगोले
> रहितसहितसंख्या मध्यसूर्यावनामम् ।
> अवनतिलवहीनः प्रोन्नतिश्चक्रपाद-
> स्त्ववनतिलवजीवा सा प्रभा नेतरा स्यात् ॥ ११ ॥

अवगतफलेति । मेषादिगे सूर्येऽपक्रमचापाक्षचापानामन्तरं मध्याह्ने सूर्यस्यावनतिं तुलादौ तयोर्योगः सूर्यावनतिर्मध्याह्नच्छाया मध्याह्नशङ्कुश्चेत्यर्थः ॥ ११ ॥

प्रकारान्तरेण मध्याह्नशङ्कुमाह—

> क्षितिजा(ज्या)द्युदलसमासो विश्लेषो वोत्तरेतरे गोले ।
> लम्बघ्नस्त्रिज्याप्तः शङ्कुर्दी(र्दि)नमध्यगे सूर्ये ॥ १२ ॥

क्षितिजे(ज्ये)ति । उत्तरगोले क्षितिज्यास्वाहोरात्रार्धज्ययोर्योगः कार्यः । दक्षिणगोले विश्लेषः कार्यः । एवमानीतः स योगो विश्लेषो वा लम्बगुणितस्त्रिज्याभक्तो मध्याह्नशङ्कुर्भवति ॥ १२ ॥

मध्याह्नच्छायक्षा(या)मा(दि)त्यानयनमाह—

> छायया समभिनीतसंगतेः
> काष्ठतोऽधिकतरं यदा लवम् ।
> तद्भिदः स्फुटरवेरपक्रम-
> स्तिग्मरश्मिरपि चोत्तरे तदा ॥ १३ ॥

छायदेति । मध्यंदिनच्छायाङ्गुलसाधितदृग्ज्याकाष्ठायदाऽक्षकाष्ठमधिकतरं तदा [illegible] क्रमः । तदा रविरप्युत्तरगोले भवति ।

---

लघुभास्करीय त्रिप्रश्न ५ ब्रह्म. त्रिप्रश्न त्रयध्याय ३२–३ सिद्धान्तशेखर त्रिप्रश्न १७ खण्डखाद्यके त्रिप्रश्न ५ वासना. शिष्यधी. त्रिप्रश्न. ९ सूर्य. त्रिप्रश्न. ४४ ग्रहग. स्पष्टा. ५८

यत्र सर्वदाऽधिकोऽक्षस्तत्र देशोऽ( शेऽ )यं विधिरिति तद्ग्र(ग्र)हणेन घोषितम् । उत्तरगोलेऽपि सममण्डलाद्दक्षिण एव यत्र मध्याह्ने रविर्भवति तत्रायं विधिरित्यर्थः ॥ १३ ॥

सममण्डलादुत्तरस्थेऽर्के विधिमाह—

**छायायां याम्यकाष्ठायामक्षयुक्ता नतिः स्फुटा ।**
**जायन्तेऽपक्रमा भागो भास्वतो दक्षिणापथे ॥ १४ ॥**

छायायां याम्यकाष्ठायामिति ॥ १४ ॥

यदा मध्यच्छायादक्षिणगोलेऽपि विधिमाह—

***अक्षतोऽधिकतरा यदा नतिः**
**प(दृ)श्यते बलमतस्तदा मता ।**
**शिष्यतेऽपमधनुः स्फुटं ततो**
**भास्करोऽपि खलु याम्यगोलगः ॥ १५ ॥**

अक्षतोऽधिकतरेति । यदाऽक्षकाष्ठादधिकतरं नतिकाष्ठं तदाऽक्षकाष्ठहीनं नतिकाष्ठमपक्रमधनुर्भवति । रविरवि(पि) दक्षिणगोले भवति । सर्वदा नतेरधिकत्वं दक्षिणगोल एव भवति ॥ १५ ॥

अपक्रमेणाऽऽदित्यानयनमाह—

**तद्गुणेन गुणितां त्रिराशिजां**
**ज्यामपक्रमगुणेन संहरेत् ।**
**लब्धचापगुणिते स्फुटं ततो**
**भास्करं त्रिकमपण्णराधिकः ॥ १६ ॥**

तद्गुणेनेति । अ[प]क्रमधनुषो ज्यां त्रिज्यया निहत्य परमाप्युतं रविं तृतीयपदे तद्भुजचापं राशिषट्कयुतं रवि:(विं) चतुर्थपदे तद्भुजाचापं राशित्रयाद्विशोध्य शिष्टं राशित्रययुतं रवि:(विं) राशत्रविशोधनं समपद गतस्य कोटित्वान्न्यायतः सिद्धं भवति ॥ १६ ॥

अपक्रमनतिभ्यामक्षानयनमाह—

**उत्तरे संयुतिः सूर्ये विश्लेषो दक्षिणे स्मृतः ।**
**अपि(प)क्रान्तनतांशानां छायायां च पलं भवेत् ॥ १७ ॥**

---

*ग्रहलाघवे त्रिप्रश्न ७०,

उत्तर इति । उदग्गोले मध्याह्नच्छायाङ्गुलसाधितनतिचापस्यापक्रमचापस्य च योगो लपद्यं मध्यच्छाया उत्तरगा चेदेवं दक्षिणगा चेन्नतिचापहीनमपक्रमचापमक्षचापं दक्षिणगोले । अपक्रमचापहीनं नतिचापमक्षचापं छायायां चेति दक्षिणस्थायां छायायां च विश्लेषः कार्य इत्यर्थः ॥ १७ ॥

गतगन्तव्यघटिकाभिः शङ्क्वानयनमाह—

दक्षिणोत्तरगते विवस्वति
प्राणराशिनिचया धनक्षयौ ।
साक्षजं चरदलं सदा सतो
जीवयाऽत्र गुणितं दिवागुणम् ॥ १८ ॥
संहरेत्त्रिभुवनस्य जीवया
तत्र लब्धनिचये क्षितेर्गुणम् ।
व्यत्ययं चरदलस्य तत्कुरु
स्वावलम्बकहतं हरेत्पुनः ॥ १९ ॥
व्यासखण्डनिचयेन लभ्यते
शङ्कुरिष्टघटिकासमुद्भवा ।
व्यासतत्कृतिविशेषजापदं
कथ्यते स्फुटतरा प्रभा हि सा ॥ २० ॥

दक्षिणोत्तरेति । दक्षिणगोले गतगन्तव्यप्राणेषु चरदलप्राणाः क्षेप्याः । उत्तरगोले तेभ्यः शोध्याः । एवं कृते गतगन्तव्यप्राणानां जीवामानीय तां स्वाहोरात्रार्धज्यया निहत्य त्रिराशिज्यया विभज्य लब्धे फले ×क्षितिज्यां दक्षिणगोले विशोधयेत् । उत्तरगोले प्रक्षिपेत् । एवं कृतं तत्फलं लम्बके निहत्य व्यासार्धेन हरेत् । तत्र लब्धं शङ्कुर्भवति । तद्वर्गव्यासकृत्योर्विशेषमूलं छाया भवति ॥ १८ ॥ १९ ॥ २० ॥

शङ्क्वानयन उपायान्तरमाह—

आदित्यलग्नविवरांशगुणेन हत्वा
तत्कालमध्यपरिनिष्ठितलम्बकाख्यम् ।
विष्कम्भभेदरहितः स्फुटशङ्कुरुक्त-
स्तद्दोलभेदकृतिशुद्धपदं प्रभा स्यात् ॥२१॥

---

×सूर्य स्फुटगति ६१

आदित्यलग्नेति । इष्टकाल उदयलग्नमानीयाऽऽदित्यतल्लग्नयोर्विवरस्य जीवमानयेत् । तद्विवरं त्रिराश्यधिकं चेत्त्रिराशिभ्यो विशोध्य शिष्टस्य जीवामानयेत् । तया जीवया तत्कालमध्यपरिनिष्ठितं लम्बकं वक्ष्यमाणं निहत्य त्रिराशिज्यया विभजेत् । तत्र लब्धमिष्टशङ्कुर्भवति । तद्वर्गव्यासार्धकृत्योर्विशेषमूलं प्रभा छाया भवति । वाशब्दः प्रकारान्तरसूचनार्थः । एष शङ्कुः स्थूलो भवति । अतो गोविन्दस्वामिनाऽस्य त्रिःप्रकारं योजना व्याख्याता । पूर्वत्र संतोषाभावाद्धि तथा संभवति । वक्ष्यमाणलम्बकदोषादस्य स्थौल्यमिति गोलविद आहुः ॥ २१ ॥

तत्कालमध्यलम्बकानयनमाह—

**इनरविकक्ष्यामध्यज्यात्रिज्याकृत्योर्विशेष्यशेषपदम् ।**
**तत्कालमध्यजातो गोलज्ञैर्लम्बकः कथितः ॥ २२ ॥**

[इन]रविकक्ष्येति । रविकक्ष्यायां मध्यज्यानयनं पञ्चमाध्याये वक्ष्यति । तन्मध्यज्यावर्गव्यासार्धकृत्योर्विशेषपदं तत्काले मध्यज्यातो लम्बको भवति । मध्यलग्नावमचापाक्षचापयोर्योगस्य विश्लेषस्य वा जीवा मध्यज्येत्युच्यते । अत्र सूक्ष्मलम्बकावगतिस्तु भाष्यव्याख्यया सिध्येत् ॥ २२ ॥

पुनरपि प्रकारान्तरेण शङ्क्वानयनमाह—

**प्राणैश्चरैर्युतविहीनघटीगुणेन**
**तज्ज्याविपर्ययकृतेन हतस्य वाऽस्य ।**
**द्युव्यासलम्बकपरस्परताडितस्य**
**च्छेदोऽर्धविस्तरकृतिः फलमस्य शङ्कुः ॥ २३ ॥**
**तज्ज्याविपर्ययकृताद्युज्याभ्यस्तेन शङ्कुना हत्वा ।**
**विषुवत्कर्णाभ्यस्तात्रिज्याछेदः फलं शङ्कुः ॥ २४ ॥**

प्राणैश्चरैरिति । *दक्षिणोत्तरगोलयोः क्रमाच्चरदलप्राणैर्युतानां हीनानां च गतगन्तव्यासूनां जीवामानीय तया चरदलज्याहीनयुतया स्वाहोरात्रार्धं निहत्य पुनर्लम्बकेन च निहत्य व्यासार्धवर्गेण विभजेत् । तत्र लब्धं शङ्कुर्भवति ॥ २३ ॥ २४ ॥

यद्वा गतगन्तव्यासुभ्यश्चरदलासवो न शोध्याः । तदा विशेषमाह—

*लघुभास्करीये त्रिप्रश्न ८–९

इष्टासुभ्यश्चराशुद्धेन व्यत्ययः शेषजीवया प्राग्वत् ।
लब्धं क्षितिमौर्व्या हित्वा शङ्कुं स्वकर्मणा ॥ २५ ॥

इष्टासुभ्य इति । चरासुभ्यो गन्तव्यासून्विशोध्य शिष्टस्य जीवां स्वाहोरात्रार्धेन निहत्य त्रिज्यया विभज्य लब्धं क्षितिज्यातो विशोध्य शिष्टं लम्बकेन निहत्य त्रिज्यया विभजेत् । तत्र लब्धं शङ्कुर्भवति ॥२५॥

सूर्यग्रहणे कदाचिद्रात्रावपि शङ्कुर्ज्ञेयः । ततस्तदानयनमाह—

शर्वर्यां शङ्कुरर्कस्य कार्यो व्यस्तेन कर्मणा ।
दिनस्य क्षयवृद्धिभ्यां रात्रौ व्यस्ते नते यतः ॥ २६ ॥

शर्वर्यामिति । रात्रिगन्तव्यासुषु चरदलं दिनव्यत्ययेन कार्यं क्षितिज्या च दिनव्यत्ययेन कार्या । शिष्टं दिनवदेव ॥ २६ ॥

इष्टच्छायाया गतगन्तव्यकालानयनमाह—

इष्टच्छायाप्तशङ्कुं सकलगुणहतां संहरेल्लम्बकेन
प्राप्ते मेषादिगेऽर्के क्षितिजगुणकलाः शोधयेद्दक्षिणस्थे ।
योज्यन्ते ताः क्रमेण त्रिगु( ग्र )हगुणहतं संहरेच्छेषराशिं
द्यावासेनाप्तचापे स्वचरदललवव्यत्ययेनासुराशिः ॥ २७ ॥

अह्नः शेषो गतो वा रसखरसहृतो नाडिकाद्याः प्रदिष्टा-
स्त्रिज्यावर्गाहतं वा समभिमतनरा भाजयेद्घातजेन ।
द्युव्यासार्धाभिकोट्या स्वचरदलगुणे पूर्ववत्कल्पितस्य
चापे प्राणैश्चराख्यैः पुनरपि विधिना व्यत्ययेनासुराशिः॥२८॥

अक्षकर्णहतः शङ्कुर्भूयोव्यासार्धताडितः ।
शङ्कुघ्नद्युदलाप्तो वा पूर्ववन्नाडिकाविधिः ॥ २९ ॥

इष्टच्छायाप्तेति । इष्टकाले द्वादशाङ्गुलशङ्कोश्छायया महाशङ्कुमानीय तं त्रिज्यया निहत्य लम्बकेन विभज्य लब्धे क्षितिज्यामुत्तरगोले विशोध्य दक्षिणगोले तु प्रक्षिप्य व्यासार्धेन निहत्य स्वाहोरात्रार्धेन विभज्य लब्धं चापीकृत्य तस्मिन्नुत्तरगोले चरदलं प्रक्षिपेत् ।

दक्षिणे विशोधयेत् । ते गतगन्तव्यासवो भवन्ति । पुनः षड्भिः षष्ट्या च भक्ते नाडिका भवन्ति । त्रिज्यावर्गाहतं वेति प्रकारान्तरमहं(माह) । शङ्कुं त्रिज्यावर्गेण निहत्य स्वाहोरात्रलम्बज्ययोः संवर्गेण विभज्य लब्धे दक्षिणोत्तरगोलयोश्चरदलज्यां प्रक्षिप्य संयोज्य च चापीकृत्य तच्चापे चरदलं विशोधयेत्प्रक्षिपेच्च । ते गतगन्तव्यासवो भवन्ति । अक्षकर्णेति प्रकारान्तरम् । अक्षकर्णेन शङ्कुं निहत्य पुनर्व्यासार्धेन च निहत्य द्वादशघ्नेन स्वाहोरात्रार्धेन विभज्य लब्धे पूर्ववच्चरदलज्यां प्रक्षिप्य संशोध्य वा चापीकृत्य तच्चापे चरदलं विशोधयेत्प्रक्षिपेच्च । ते गतगन्तव्यासवः स्युः ॥ २७ ॥ २८ ॥ २९ ॥

*उदयलग्नानयनमाह–

सूर्यागतसमभ्यस्ता तद्रासि( शी )ष्टासवो हृताः ।
राशिभागैः कलाभिर्वा लब्धारव्यगतासवः ॥ ३० ॥
इष्टासुभ्यो विशोध्यैता रवौ चान्यगतः क्षिपेत् ।
राशिप्राणास्ततोऽपास्य देया भानौ च राशयः ॥३१॥
शेषं त्रिंशत्समभ्यस्तमिष्टराश्यसुभिर्हृतम् ।
लब्धभागादिसंयुक्तमिष्टकालोदयं विदुः ॥ ३२ ॥

सूर्यागतेति । सूर्यस्यागतं गन्तव्यं भागीकृतं लिप्तीकृतं वा स्वोदयासुभिर्निहत्य राशिभागै राशिकलाभिर्वा विभज्य लब्धा अगतासवो भवन्ति । तानिष्टासुभ्यो विशोध्य रवौ राशिशेषं क्षिप्त्वा शेषासुभ्यश्च यथालब्धमुदयासून् विशोध्य शुद्धराशीन् रवौ क्षिप्त्वा शिष्टा त्रिंशदादिगुणिता वर्तमानोदयासुभिर्लब्धान् भागान् सलिप्तान्प्रक्षिप्तराशौ सूर्ये प्रक्षिपेत् । स उदयलग्नं भवति ॥ ३० ॥ ३१ ॥ ३२ ॥

अस्तलग्नमाह–

पूर्वलग्नं सचक्रार्धमस्तलग्नं विधीयते ।
उदयस्य वशादस्तमयन्ते राशयो यतः ॥ ३३ ॥
उदयस्य गता भागाः सोदयेन हता हृताः ।
त्रिंशता प्राणलब्धिः स्याल्लग्नराश्यसवः पुनः ॥३४॥

*लघुभास्करीये त्रिप्रश्न १७–९ सूर्य त्रिप्रश्न ४६–८, ब्राह्म त्रिप्रश्न १८–२० शिष्यधी त्रिप्रश्न ११–२ सिद्धान्तशेखर त्रिप्रश्न १८–२० महगणिते त्रिप्रश्न २–४

आहार्ययावदर्कस्य राशिभिस्तूदयासवः ।
जायन्ते पुनरर्कस्य गन्तव्यांशासुभिर्युताः ॥ ३५ ॥

प्राणा दिवसशर्वर्योर्विज्ञेयाः षड्विभाजिताः ।
षष्ट्या भूयोऽपि ये लब्ध्वा घटीविघटिकासवः ॥३६॥

पूर्वलग्नमिति । षड्राशियुतमुदयलग्नमस्तलग्नं भवति । तत्र हेतुमाह—उदयस्येति । लग्नरविभ्यां द्युगतकालानयनमाह—उदयस्य गता इति। उदयस्यागतभागैस्त्रैराशिकादसूनानीय तथा सूर्यस्य गन्तव्यभागैश्चासूनानीय तदन्तरालगतराशीनामुदयासूंश्च प्रक्षिपेत् । ते द्युगतासवो भवन्ति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

रात्रौ तु षड्राशियुतोऽर्कों( तेऽर्के) ग्राह्यमर्काग्रानयनं सममण्डलशङ्क्वानयनं चाऽऽह—

स्फुटरविभुजनिघ्नां यां परां क्रान्तिजीवां
हरतु समवलम्बज्याकलापेन भूयः ।
स्फुटदिवसकराग्रा सा यदाऽक्षांशहीना
रविरपि यदि गोले चोत्तरे लम्बकघ्नाः ॥ ३७ ॥

अक्षज्यया हरेद्भूयः शङ्कुज्या सममण्डले ।
तद्वर्गव्यासकृत्योर्यद्विश्लेषे यत्पदं प्रभा ॥ ३८ ॥

स्फुटरवीति । सायनार्कभुजज्यया निघ्नां परमक्रान्तिज्यां लम्बकज्यया विभजेत् । तत्र लब्धमर्काग्रं× भवति । सा यदाऽक्षांशहीनेति। अत्र वेत्यनेनार्काग्रासाधनभूतापमज्योक्त (च्द)ौ । अक्षांशशब्देन चाक्षज्या, उत्तरगोले यदा क्रान्तिज्याऽक्षज्यातोऽल्पसंख्या स्यात्तदा तद्भूतामर्काग्रां लम्बकेन निहत्याक्षज्यया विभजेत् । तत्र लब्धं सममण्डलशङ्कुर्भवति । भूय इति वचनं प्रथमत्रैराशिकसूचनार्थम् । तस्य सममण्डलशङ्कोर्व्यासार्धस्य च वर्गविश्लेषपदं छाया भवति ॥३७।३८॥

सममण्डलप्रवेशकालमध्याह्नकालयोरन्तरालकालानयनमाह—

भानोर्भुजामविहतां परमापमेन-
द्युज्याप्रभेदभाजितामहताक्षकोटिः ।

×सिद्धान्तशेखरे त्रिप्रश्न ५८

अक्षज्ययाऽऽप्तकृतिशुद्धकृतेस्त्रिमौर्व्या
मूलस्य काष्ठमसवो गगनावधेर्वा ॥ ३९ ॥

भानोर्भुजामिति । स्फुटार्कभुजज्यां परमापमगुणितां स्वाहोरात्रार्धेन विभजेत् । तत्र लब्धेन लम्बकज्यां निहत्याक्षज्यया विभजेत् । तत्र लब्धस्य वर्गं त्रिज्यावर्गाद्विशोध्य शिष्टस्य मूलं चापीकृतं सममण्डलाद्गगनावधेः कालस्यासवो भवन्ति ॥ ३९ ॥

व्यासार्धताडितवपुः सममण्डलस्य
दृश्या(ग्ज्या)भवा दिवसविस्तरभेदभक्ता ।
लब्धस्य काष्ठकविधेरसुनाडिकाः...।
भास्वत्खमध्यविवरप्रभवा भवन्ति ॥ ४० ॥

व्यासार्धताडितवपुरिति । सममण्डलस्य दृग्ज्या व्यासार्धहता स्वाहोरात्रार्धज्याभक्ता चापिता भास्वत्खमध्यविवरकालः...त्मको भवति ॥४०॥

सममण्डलच्छाययाऽऽदित्यानयनमाह—

छायाभिनीतसममण्डलशङ्कुनिघ्न-
मक्षस्य [सं]गुणमुपाहर नित्यमेव ।
सर्वापमेन समवाप्ततनुर्विवस्वान्
युज्या(क्त्या)त्रिराशिसहितश्च भटप्रणीतम् ॥ ४१ ॥

छायाभिनीतेति । द्वादशाङ्गुलशङ्कोः समच्छायया साधितसमशङ्कुनाऽक्षज्यां निहत्य परमापक्रमेण विभज्य लब्धं चापीकृतमर्को भवति । युक्त्या त्रिराशिसहित इति । उत्तरायणे तच्चापमेवार्कः । दक्षिणायने तु तच्चापं राशित्रयाद्विशोध्य शिष्टे राशित्रये क्षिपेत् । सोऽर्कः स्यात् ॥ ४१ ॥

अथ च्छायाभ्रमणरेखां कर्तुं विदितदिग्विभागे वृत्ते बिन्दुत्रयग्रहणमार्याचतुष्टयेनाऽऽह—

अर्काग्राशङ्क्वग्रे छायां च यथेष्टकालिकाम् ।
छत्वाऽग्रद्वयस्य योगतुल्यांशं नान्यथा विवरः ॥ ४२ ॥

तेन क्षुण्णां छायां भङ्क्त्वा त[द्]ग्रगणेन यल्लब्धम् ।
कृतदिग्विभागकेन्द्राद्दिग्विपरीतं निधातव्यम् ॥ ॥ ४३ ॥
तन्मध्यभेदिसूत्रं प्रागपरदिशोः प्रसार्यते दूरम् ।
छायाप्रमाणसूत्रं तिर्यक्केन्द्रादिदं ज्ञेयम् ॥ ४४ ॥

अर्काग्राशङ्क्वग्रे इति । इष्टकालेऽर्काग्रां शङ्क्वग्रं महाच्छायां चाऽऽनीयार्काग्राशङ्क्वग्रयोस्तुल्यदिशोर्योगं कुर्यात् । भिन्नदिशोरन्तरं कुर्यात् । एवमानीतेनार्काग्राशङ्क्वग्रयोर्योगेनान्तरेण वा द्वादशाङ्गुलशङ्कोस्तत्कालच्छायां निहत्य तत्कालमहाच्छायया विभज्य लब्धं कृतदिग्विभागे यथेष्टवृत्ते केन्द्राद्ग्रादिश्य(शि ष्य)त्ययेन दक्षिणोत्तरसूत्रे नीत्वा ततः पूर्वापरं सूत्रं तत्स्थानमध्यमत्स्यानुसारेण कुर्यात् । यथा छायासूत्रं तत्सूत्रे पतति तथा कुर्यात् । पुनस्तत्काले द्वादशाङ्गुलशङ्कोश्छायाप्रमाणसूत्रं वृत्तकेन्द्रात्पूर्वतो पतेश्च तिर्यक्कृतसूत्रान्तं नीत्वा तत्सूत्रस्य च्छायासूत्राग्रस्य च योगद्वये बिन्दुद्वयं कुर्यात् । पुनः केन्द्रात्तद्दिने मध्यच्छायाङ्गुलप्रमाणं सूत्रं तच्छायादिशि दक्षिणोत्तरसूत्रे नीत्वा तदग्रे तृतीयबिन्दुं कुर्यात् । एवं बिन्दुत्रयं भवति ॥ ४२ ॥ ४३ ॥ ४४ ॥

यस्तु दिग्विभागमज्ञात्वा छायाभ्रमणरेखां कर्तुमिच्छति तस्य विधिं वक्ष्य इत्याह—

यो वा स्यादभि(विदि)तदिग्विभागकेन्द्रो
दिक्छायाभ्रमणविप्रकर्तुकामः ।
तस्याशास्फुटलिखितोरुवृत्तनेमि-
र्यच्छाया त्यजति यथा तथा प्रवक्ष्ये ॥ ४५ ॥

यो वा स्यादिति ॥ ४५ ॥

तद्विधिमाह—इष्टद्युतेरित्यादिनाऽऽर्यापञ्चकेन ।

इष्टद्विके[ द्युते ]स्तु कृत्वा दृग्ज्याशङ्कुं तथा शङ्क्वग्रम् ।
विश्लेषो वाऽग्रायुतिं प्राहुः कर्णोऽत्र दृग्जीवा ॥ ४६ ॥
...हबिन्दुद्वयं विरच्य पूर्वापरयोर्दिशोर्यथायोगम् ।
मध्यच्छायाशिरसि ज्ञेयो बिन्दुस्तृतियावत् ॥ ४७ ॥
तत्कृतिविश्लेषपदं दृग्ज्याकर्णस्य कथ्यते कोटिः ।
छायाघ्ने कोटिभुजे दृग्ज्याभक्ते तयोर्माने ॥४८॥

शङ्कोस्तत्समवपुषस्त्रिजवो भुजकोटिसंघटिताः ।
वंशशलाकास्ताभिः कोणे कृतशङ्कुसंचारम् ॥ ४९ ॥
चतुरश्रं द्वितीयकर्णात्रिभुजं वा कारयेत्स्फुटं यन्त्रम् ।
विन्यस्यैतद्भ्रमयेच्छायाकर्णानुगा यावत् ॥ ५० ॥
आशाभुजकोटिज्यां छायाकर्णाग्रयोरुभौ बिन्दू ।
मध्यच्छायाशिरसि ज्ञेयो बिन्दुस्तृतीयोऽन्यः ॥५१॥

इष्टकाले द्वादशाङ्गुलशङ्कुच्छायया महाच्छायां महाशङ्कुं शङ्क्वग्रं चाऽऽनीय पूर्ववदग्रद्वयस्य योगं वियोगं वा कुर्यात् । स बाहुर्भवति । महाच्छायाऽत्र कर्णः । तयोर्वर्गविश्लेषपदं कोटिः । पुनस्तत्काले द्वादशाङ्गुलशङ्कोश्छायया ते कोटिभुजे निहत्य महाच्छायया विभजेत् । तत्र लब्धे इष्टभुजाकोटी भवतः । द्वादशाङ्गुलच्छाया तयोः कर्णः स्यात् । पुनः शङ्कुव्यासतुल्यव्यासास्तिस्रश्चतस्रो वा वंशशलाकाः संपाद्याः । तासु मध्ये ऋज्वी दीर्घा, एका रेखा च कार्या । पुनस्ताभिरत्रोदितभुजाकोटिद्युतिकर्णैर्निष्पन्नत्रिकोणसदृशं त्रिकोणं परस्परघटिताभिः कुर्यात् । यथा परस्परघटितस्य शलाकात्रयस्य मध्यगतरेखात्रययोगेन भुजाकोटिद्युतिकर्णैर्निष्पन्नत्रिकोणसमं त्रिकोणं भवति तथा कुर्यात् । कोणे कृतशङ्कुसंचारमिति कर्णावसक्ते कोणे प्रतिष्ठितद्वादशाङ्गुलशङ्कुंयन्त्रं कुर्यादित्यर्थः । चतुरश्रं यन्त्रं वा कुर्यात् । तत्र कोटिसमे द्वे शलाके भुजासमे द्वे शलाके ताभिः परस्परं घटिताभिश्चतुरश्रं यन्त्रं भवति । तत्राप्येककोणे शङ्कुः स्थाप्यः । तत्र कोणसूत्रं कर्णो भवति । एवं संपादितं यन्त्रं समतले विन्यसेत् । यथा यन्त्रस्थशङ्कोश्छाया यन्त्रकर्णेऽवतिष्ठते तथा विन्यसेत् । पुनश्छायाभ्रमणसमयन्त्रभ्रमसमयन्त्रमपि भ्रमयेत् । तत्र यदा यन्त्रस्थशङ्कुच्छाया यन्त्रकर्णसमप्रमाणा भवति तदा यन्त्रभुजा दक्षिणोत्तरायता भवति । यन्त्रकोटिः पूर्वापरायता भवति । एवं कृतयन्त्रस्थभुजाकोटिवशाद् दिशो विज्ञाय शङ्कुमूलाद्दक्षिणोत्तरसूत्रच्छायाग्रात्पूर्वापरायतं सूत्रं च संपाद्य पूर्ववच्छायाग्रयोर्बिन्दुद्वयं मध्यच्छायाग्रे तृतीयबिन्दुं च कुर्यात् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

छायाभ्रमणलेखनमाह—

बिन्दुत्रयस्य सकलस्य शिरोवगाहि
संलिख्यते शफरिकाद्वितयेन वृत्तम् ।
तन्मण्डलाग्रविनिवेशितमस्तके य-
च्छाया प्रयाति फणिजीवहिमन्त्ररुद्धा ॥ ५२ ॥

बिन्दुत्रयस्येति । बिन्दुत्रयं मध्यं कृत्वा वृत्तत्रयमालिख्य तज्जनितमत्स्य-द्वयमुखपुच्छनिर्गतसूत्रयोर्योगमध्यं कृत्वा बिन्दुत्रयस्पृग्वृत्तैकदेशं धनुराकारमा-लिखेत् । तच्छायावर्त्म भवति ॥ ५२ ॥

अपक्रमाक्षि[ति]ज्या-भ्यामक्षानयनमाह—

इष्टक्रान्तिक्षितिजावर्गसमासस्य मूलमर्काग्रा ।
क्षितिजाव्यासार्धहता सूर्याग्रहृतावलस्य गुणः ॥ ५३ ॥

इष्टक्रान्तीति । इष्टापमक्षितिज्ययोर्वर्गयोगपदमर्काग्रा भवति । क्षितिज्यां व्यासार्धेन निहत्यार्काग्रया विभजेत् । तत्र लब्धमक्षज्या भवति ॥ ५३ ॥

शङ्क्वग्रानयनमाह—

इष्टजीवाहतः शङ्कुरिष्टकालसमुद्भवः ।
भाजितो लम्बकेनाथ शङ्क्वग्रं नित्यदक्षिणम् ॥५४॥

अक्ष(इष्ट)जीवेति । स्पष्टार्थः ॥ ५४ ॥

विषुवच्छायाङ्गुलानयनमाह—

शङ्क्वग्रे द्वादशाभ्यस्ते स्वेष्टशङ्कुहृते फलम् ।
छाया वैष्टपतिज्ञेया विस्तरश्चात्र कथ्यते ॥५५॥

शङ्क्वग्र इति । इष्टशङ्क्वग्रं द्वादशभिर्निहत्येष्टशङ्कुना विभजेत् । तत्र लब्धं विषुवच्छायाङ्गुलं भवति ॥ ५५ ॥

विस्तरेणोच्यते । तदाह—

दिवो( ग्रीवा )समां भगणभागविभक्तवृत्तां
कुर्यात्स्थलीं समतलां कृतदिग्विभागाम् ।
तस्या जलेशदिशि मण्डलमध्यदृष्टि-
र्विद्या( ध्ये )द्रविं परिधिलग्नमनाकुलात्मा ॥ ५६ ॥
पूर्वरेखाग्रवेधस्य रविवेधस्य चान्तरम् ।
अर्काग्राचापनिर्माणं परितौ( धौ )भागलक्षिते ॥ ५७ ॥

**अर्काग्राज्या भवेत्तस्य तन्नतिज्याविशेषजा ।**
**लिप्ताशङ्क्वग्रजीवाया दक्षिणे चोत्तरेऽन्यथा ॥ ५८ ॥**
**दक्षिणाभिमुखी च्छाया यदा भवति भास्वतः ।**
**नतिज्या रहितार्काग्रा शङ्क्वग्रं कथ्यते तदा ॥ ५९ ॥**

ग्रीवासमामिति । युक्तितोऽर्काग्रानयनप्रकारमात्रो(त्रमु)च्यते । उन्नत्या ग्रीवासमां स्थलीं समतलां वृत्तामेकैकभागान्तरेऽङ्कैरङ्कितपरिधिं कृतदिग्विभागां पूर्वापरसूत्रदक्षिणोत्तरसूत्रयुतां संपाद्य तस्याः पश्चिमदिशि स्थित्वा मण्डलमध्य-दृष्टिर्मण्डलगे(के)न्द्रावगाहिन्या दृष्ट्या तस्यां परिधिलग्नमर्धोदितं सूर्यं विध्येत् । मण्डलमध्यगतया दृष्ट्याऽर्धोदितसूर्यबिम्बस्य मध्यभागः परिधौ यत्र पततीति निरीक्षयेदित्यर्थः । तत्र भागलक्षिते परिधौ यत्र पूर्वापरसूत्राग्रं पतति यत्र रविबिम्बस्य मध्यं च पतति तयोरन्तरालमर्काग्रायाश्चापप्रमाणं भवति । भागलक्षिते परिधाविति । परिधौ कृतभाविभागवशाद् भागाश्च कल्प्या इत्यर्थः । तस्य चापभागस्य जीवा अर्काग्रा भवति । तन्नतिज्याविशेषजा । लिप्ताशङ्क्वग्रजीवाया दक्षिणे इति । तद्दिनमध्याह्नद्वादशाङ्गुलशङ्कुच्छायां विज्ञाय तया पूर्ववन्मध्यच्छायामानयेत् । सा नतिज्या भवति । दक्षिणगोले नतिज्यार्काग्रयोर्विश्लेषः शङ्क्वग्रं भवति । उत्तरगोले तु तयोर्योगः शङ्क्वग्रं भवति । तत्रापि दक्षिणाभिमुख्यां छायायां नतिज्याहीनार्काग्रा शङ्क्वग्रं भवति । तेन पूर्ववत्तद्देशसंभवा विषुवच्छाया साध्या । द्वादशाहताच्छङ्क्वग्राच्छङ्कुना विषुवच्छाया भवतीत्यर्थः। पुनर्विषुवच्छायातच्छङ्कुकर्णैः पूर्ववदक्षावलम्बकौ साध्यौ । पुनः पूर्ववदक्षनतभागैरर्कश्च साध्यः। अक्षनतभागयोर्योगविश्लेषवशादपमसिद्धिः। तद्वशादर्कसिद्धिरिति क्रमः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

विदितग्रहवेदितव्यग्रहयोरन्तरकालेन तद्विवरभागानयनमाह—

**विद्धि तेन विषुवत्प्रभां सती**
**पूर्ववच्च चललम्बकौ पुनः ।**
**वेदितव्यविदितग्रहान्तरं**
**नाडिकाभिरवगम्य तत्परः ॥ ६० ॥**
**तद्‌गुणास्तु घटिकालवास्तु कैः**
**पूर्वपश्चिमदिशि स्थिते क्षयः ।**

उच्यते धनमता क्रमेण त-
ज्ज्ञातचारनिचयैः सदा बुधैः ॥ ६१ ॥

वेदितव्येति । रविरन्यो वा यो विदितो ग्रहः, यश्च वेदितव्यस्तयोरन्तरकालमुदयेऽस्तमये मध्याह्ने वा नाडिकाभिरवगम्य तदन्तरनाडिकाः षड्भिर्गुणिता विवरभागा भवन्ति । ते भागा विदितग्रहे पूर्वदिशि स्थिते तस्मिञ्छो... पश्चिमदिशि स्थिते तस्मिन्क्षेप्याः । एवं भागैर्हीनयुक्तो विदितग्रहो वेदितव्यग्रहः स्फुटो भवति । अत्रोक्ता भागाः स्थूलाः स्युः । अतस्ते भागा राशि...भिर्निहता ग्रहस्थितराश्युदयासुभिर्भक्ता ग्राह्याः। मध्याह्ने तु ग्रहस्थितराशेर्लङ्कोदयासुभिर्हर्तव्याः ॥ ६० ॥ ६१ ॥

अश्विन्यादिताराणां स्वावस्थितराशिभागोऽप्येवं वेद्य इत्याह—

**एवं नक्षत्रताराणां ग्रहैस्ताराभिरेव च ।**
**साधितं क्षेत्रनिर्माणं युक्त्या सर्वत्र सर्वदा ॥ ६२ ॥**

एवं नक्षत्रताराणामिति । साधितमिति । तच्च पूर्वैः साधितमित्यर्थः ॥६२॥

तथा साधितस्त(तं त)त्क्षेत्रं प्रदर्शयति—

**अष्टौ भानि क्रिये षट् स्युरेकोना विंशतिर्वृषे ।**
**द्वौ दिशौ मिथुने द्वौ च तिथयस्त्व(स्त्र्य)ष्टकं परे ॥ ६३ ॥**
**अष्टौ सार्धास्त्रिसप्तैनेवेदाः शैलोनिताः परे ।**
**पश्चाद्र्येकं तुलाराशौ द्वौ विनाऽष्टादशाः परे ॥ ६४ ॥**
**एकोऽब्धीन्दुस्त्रिरन्ध्राणि चापे भूतैकषड्ग्रु(ड्य)माः ।**
**मृगेऽद्रिर्भूर्निताः कुम्भे पञ्चेन्द्वन्तेऽश्विभादितः ॥ ६५ ॥**

अष्टौ भानीत्यादि । नक्षत्राधिष्ठितराशौ तद्भुक्तभोगांश्च क्रमेणात्र दर्शयति । मेषेऽष्टौ भागा अश्विनीनक्षत्रेण भुक्ताः । भरण्या भानि सप्तविंशतिः । एवं परेषु च ज्ञेयम् । शैलोनकन्यका । कन्यायन्त्रयोर्विंशतिभागा इत्यर्थः । त्र्यष्टकं चतुर्विंशतिः । अद्र्येकं सप्तदश । अब्धीन्दुश्चतुर्दश । त्रिरन्ध्राणि सप्तविंशतिः । भूतैकाः पञ्चदश । षड्यमाः षड्विंशतिः । द्यूनकुम्भे कुम्भेऽष्टाविंशतिरित्यर्थः । पञ्चेन्दुः पञ्चदश । अन्त्ये मीनान्त्ये योगभागा ग्रहयोगे भानां दृष्टा भागा इहोक्ता इत्यर्थः ॥ ६३ ॥ ६४ ॥ ६५ ॥

अथ नक्षत्राणां विक्षेपभागानाह—

योगभागक्रमेणैते बोद्धव्याश्वाश्विभादिषु ।
उदगाशार्कभूतानि दक्षिणे बोधानयनं च दिग्भवाः ॥६६॥
उदग्रसास्तथाकाशदक्षिणे पर्वतां वरम् ।
उदगर्थाश्वतस्रैका दक्षिणे सप्त चाश्विनौ ॥ ६७ ॥
सप्तत्रिंशदुदग्भावा याम्ये सार्धांशकास्त्रयः ।
अदृन्यब्धयोऽद्रिभागाश्च स्वरास्ते सत्रिभागकाः ॥ ६८ ॥
उदकृत्रिंशत्कृतिः षण्णां याम्ये लिप्ताऋिषट्ककाः ।
उदग्जिनाश्विलिप्ते च विहायः कीर्त्यते वरा ॥ ६९ ॥
विक्षेपांशाः क्रमेणोक्ता बोद्धव्यास्तेऽश्विभादिषु ।
योगभागसमाः सर्वे दृश्यन्ते योगजा ग्रहाः ॥ ७० ॥

उदगाशेति । सप्तत्रिंशदुदग्भागे याम्ये सार्धांशकास्त्रय इति पाठः । केषुचित्सार्धांशकासूयः इति पाठे स्वरा इत्याप्यस्यते । सत्रिभागता इति विश्वभस्य इति योज्यम् । द्विविश्वे षड्विंशतिरित्यर्थः। रेवत्याः शून्यं सर्वे ग्रहा नक्षत्रयोगभानसमास्तत्संयुक्ता उपदृश्यन्ते । यदि तयोर्विक्षेपो भवति तदा विक्षेपवशात्तयोरन्तरं ज्ञेयमित्याह—योगविभागसमा इति ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

कुत्रचित्कचित्कचिदिन्दोर्वैषम्यदर्शनात्तद्वैषम्यमाह—

विक्षेपांशैस्तयोः साध्यमन्तरं ग्रहतारयोः ।
उच्यते क्षितिलिप्ताभिर्हन्तीन्दुर्दक्षिणागतः ॥ ७१ ॥
रोहिणीशकटं षष्ट्यास्त्वष्टवर्गेण तारकाः ।
नवत्या सार्धया चित्रां विंशत्या शक्रतारकम् ॥ ७२ ॥
शतेन सार्धयुक्तेन मैत्रं शतभिषा जिनैः ।
नवत्या द्व्यूनयैन्द्राग्नं पौष्णं विक्षिप्तवर्जितः ॥ ७३ ॥
उत्तरेण शतेनाष्टौ बहुलं भेद उच्यते ।
उत्तरां परमां थ( ह )त्वा मध्यं विश्वस्य कारका ॥७४॥
दृष्टियुक्तकलास्त्वेता ग्रहैर्नक्षत्रभेदने ।

इति महाभास्करीये तृतीयोऽध्यायः ॥ ३ ॥

———

उच्यते क्षितिलिप्ताभिरिति । अत्रोच्यत इति योज्यम् । नवत्या सार्धया पञ्चोनशतेन शते षष्टौ षष्ट्यधिकशतेनेत्यर्थः । दृष्टियुक्ता विक्षेपकला एता उक्ताः ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

इति परमेश्वररचितायां कर्मदीपिकायां

तृतीयोऽध्यायः ॥ ३ ॥

---

अथ स्फुटविधिरुच्यते—

**कृत्वा देशान्तरं कर्म रवेरुच्चं विशोधयेत् ।**
**शेषं सूर्यस्य यत्केन्द्रं तस्मिन्राशित्रयं पदम् ॥ १ ॥**

कृत्वा देशान्तरमिति । मन्दोच्चादीनां संख्यां सप्तमेऽध्याये वक्ष्यति ॥१॥

**जीवाः क्रमोत्क्रमाभ्यां तु ग्राह्याः केन्द्रपदक्रमात् ।**
**जीवानां ग्रहणोपायः कथ्यते विस्तरेण सः ॥ २ ॥**

जीवा इति । अत्र स्फुटविधौ केन्द्र ओजपदे भुजायां क्रमज्या ग्राह्या । युग्मपदे कोट्या उत्क्रमज्या ग्राह्या । तत्कथमित्यत्राऽऽह—कथ्यते विस्तरेणेति ॥ २ ॥

तत्कर्माऽऽह—

**लिप्तीकृत्य हरेन्मख्या जीवा लब्धास्ततः पुनः ।**
**वर्तमानाहतं शेषं मख्या चैव विभाजयेत् ॥ ३ ॥**

लिप्तीकृत्येति । स्पष्टार्थः ॥ ३ ॥

तत्फलानयनमाह—

**पूर्वसंकलिते युक्ते ज्याः क्रमेणोत्क्रमेण वा ।**
**स्वपरिध्याहतेऽशीत्या लब्धे क्षयधनं फलम् ॥ ४ ॥**

स्वपरिध्येति । क्रमज्या उत्क्रमज्या वा याऽत्र साधिता तां स्वपरिधिसंख्यया निहत्याशीत्या विभजेत् । तत्र लब्धं जीवाफलं भवति । तत्क्षयात्मकं धनात्मकं च पदवशाद्भवति ॥ ४ ॥

तत्क्रममाह—

**केन्द्रात्पदविभागेन क्षयो धनधनक्षयाः ।**
**देशान्तरीकृते सूर्ये कुर्यात्तन्मध्यमे सदा ॥ ५ ॥**

केन्द्रादिति । प्रथमपदे तत्क्रमफलं देशान्तरसंस्कारयुते मध्यमे ऋणं कुर्यात् । द्वितीयपदे तु प्रथमपदसिद्धं पूर्णफलं विशोध्य तस्मिन्द्वितीयपदसिद्ध-मुत्क्रमफलं प्रक्षिपेत् । चतुर्थपदे तृतीयपदसिद्धं पूर्णफलं प्रक्षिप्य चतुर्थपदसिद्ध-मुत्क्रमफलं विशोधयेत् । एवं जीवाफलसंस्कृतो मध्यमस्फुटो भवति। चन्द्रमसोऽप्येवं विधिः ॥ ५ ॥

अथवा सर्वेषु पदेषु बाहुफलमेव कार्यमित्याह—

**केन्द्रे क्रियादिके चाथ फलं बाहोर्विशोधयेत् ।**
**तुलादिके तु तन्नित्यं देयं स्फुटादिदृक्षुणा ॥ ६ ॥**

केन्द्रे क्रियादिके वा(चा)ऽथेति । केन्द्रे क्रियादिके सति । तत्पदसिद्धं बाहुफलं विशोध्यं भवति । तुलादिके तत्पदासिद्धं बाहुफलं क्षेप्यं भवति । एवं बाहुफलसंस्कृतो मध्यमस्फुटो भवति । अत्र पक्षद्वयेऽपि ज्याफलं चापितमेव ग्रहे कार्यम् । कर्णविधौ तु बाहुफलं कोटिफलं च । अत्रा(चा)पितमेव ग्राह्यम् ॥ ६ ॥

भुजाविवरस्फुटमाह—

**क्रमोत्क्रमफलाभ्यस्तां मध्यां बाहुफलेन वा ।**
**भुक्तिश्चक्रकलावाप्ता पूर्ववत्तत्प्रकल्पयेत् ॥ ७ ॥**

क्रमोत्क्रमेति । क्रमफलमुत्क्रमफलं वा बाहुफलं वा यद्यद्ग्रहे क्रियते, तत्सर्वं मध्यभुक्त्या निहत्य चक्रत(क)लाभिर्विभज्य लब्धं जीवाफलं ग्रहे कार्यम्। यद्युत्क्रमफलं क्रमफलं च ग्रहे कृतं प(त)दा ताभ्यां द्वाभ्यां प्र(पृ)थङ्मध्यभुक्तिं निहत्य चक्रकलाभिर्विभज्य लब्धं फलद्वयमपि ग्रहज्याफलवत्कार्यम् । मध्यभुक्तेर्गुणकारत्वादिमं संस्कारं मध्यमे कृत्वा पुनस्तं स्फुटी कुर्यात् ॥ ७ ॥

बाहुकोटिविभागमाह—

**बाहुकोटि(टी)क्रमात्केन्द्रे कोटिबाहू गतागते ।**
**तयोर्गुणफले प्राग्वत्कर्णार्थे परिकीर्त्यते ॥ ८ ॥**

बाहुकोटी इति । बाहुफलं कोटिफलं च कर्णार्थं प्राग्वत्साध्यम् ॥ ८ ।

कर्णानयनमाह—

*आद्ये पदे चतुर्थे च व्यासार्धे कोटिसाधनम् ।
क्षिप्यते शोध्यते चैव शेषयोः कोटिका भवेत् ॥ ९ ॥

आद्ये पद इति । कोटिसाधनशब्देन कोटिफलमुच्यते । केन्द्र आद्यपदे चतुर्थपदे च कोटिफलं व्यासार्धे प्रक्षिपेत् । द्वितीयतृतीयपादयोः कोटिफलं व्यासार्धाद्विशोधयेत् । एवं कृता सा त्रिज्या कोटिका भवति । कोटिसंज्ञा भवति । तस्याः कोटिकाया बाहुफलस्य च वर्गयोगपदं कर्णो भवति । एवं सर्वत्र कर्णविधिर्ज्ञेयः ॥ ९ ॥

पुनरस्य कर्णस्याविशेषकरणमाह—

तद्बाहुवर्गसंयोगमूलं कर्णः प्रकीर्तितः ।
बाहुकोटिफलाभ्यस्ते कर्णे व्यासार्धभाजिते ॥ १० ॥
भुजाकोटिफले स्यातां ताभ्यां कर्णश्च पूर्ववत् ।
भूयः पूर्वफलाभ्यस्ते कर्णे त्रिज्याविभाजिते ॥ ११ ॥
एवं पुनः पुनः कुर्यात्कर्णं पूर्वोक्तकर्मणा ।
यावत्तुल्यो भवेत्कर्णः पूर्वोक्तविधिनाऽमुना ॥ १२ ॥
विष्कम्भार्धहता भुक्तिः सूर्याचन्द्रमसोः सदा ।
स्वाविशेषेण कर्णेन स्फुटभुक्तिरवाप्यते ॥ १३ ॥

बाहुकोटिफलाभ्यस्त इति । तत्र सिद्धं कर्णं प्रथमानीतबाहुकोटिफलाभ्यां निहत्य त्रिज्यया विभजेत् । तत्र लब्धे बाहुकोटिफले कर्णसाधने भवतः । पुनस्ताभ्यां च कर्णमानयेत् । तमपि कर्णं प्रथमानीतभुजाकोटिफलाभ्यां निहत्य त्रिज्यया विभज्य लब्धाभ्यां ताभ्यामपि कर्णः साध्यः । एवं पुनः पुनः कृत्वा कर्णमविशेषयेत् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

स्फुटभुक्त्यानयनं प्रकारान्तरेणाऽऽह—

अन्त्यजीवाऽथवा भुक्त्या गुणिता धनुषा हृता ।
स्वपरिध्याहतेऽशीत्या लब्धे हीनाऽधिके स्फुटा ॥ १४ ॥

अन्त्यजीवाऽथवेति । वर्तमानखण्डज्याऽत्रान्त्यजीवेत्युच्यते । भुजाया वर्तमानखण्डज्यां मध्यभुजा[भु]क्त्या निहत्य मख्या विभज्य लब्धं स्वपरि- [धिना] निहत्याशीत्या (८०) विभज्य लब्धं मृगादौ मध्यभुक्तेः शोधयेत् । कर्क्यादौ मध्यभुक्तौ प्रक्षिपेत् । सा च स्फुटभुक्तिर्भवति ॥ १४ ॥

* लघुमानसे. स्फुटगत्या. २ ग्रहगणिते. स्पष्टा. १९–२१ आर्यभटीये. काल. २२–३ सिद्धांतशेखरे स्फुटा. १२–४

एवमर्कस्य विधिं( धि )[ मुक्त्वा ] चन्द्रस्य विधिमाह—

अन्त्यजीवाधनुष्खण्डं केन्द्रभा(भो)गाद्विशोधयेत् ।
तद्विशुद्धमधः शेषं पात्यते विषमे ततः ॥१५॥
उच्चभक्तिविहीनाया भक्ते शीतांशुमालिनः ।
उत्क्रमज्याऽक्रमे ग्राह्या क्रमज्या चेत्क्रमे स्थिते ॥ १६ ॥
आद्यन्तयोः फलं युक्त्वा गुणयोश्चानुपाततः ।
तत्फलेन विहीनाप्ता भुक्तिः स्फुटतरा हि सा ॥ १७ ॥

अन्त्यजीवाधनुरिति । ओजपदे भुजाया वर्तमानधनुष्खण्डं केन्द्रभोगा- दुच्चगतिहीनचन्द्रभोगाद्विशोधयेत् । युग्मपदे तु वर्तमानधनुष्खण्डं मखेर्विशोध्य शेषमुच्चभुक्तिहीनाया मध्यभुक्तेर्विशोधयेत् । उभयत्र शोधितलिप्ताभ्यो वर्तमान- खण्डज्यानिहताभ्यो मख्या विभज्य लब्धं जीवाफलमेकत्र स्थापयेत् । अत्र क्रम इत्योजपदप्रदर्शकः । उत्क्रम इति युग्मपदप्रदर्शकः । ओजपदे वर्तमानजीवात उत्क्रमेण केन्द्रभुक्तिकलानां जीवा ग्राह्याः । युग्मपदे तु वर्तमानजीवातः क्रमेण केन्द्रभुक्तिकलानां जीवा ग्राह्या इत्युक्तं भवति । अतो धनुष्खण्डही- नकेन्द्रभुक्तिशेषाद्यावद्वारं मखिः शोध्या तावद्वारं मखिं विशोध्य वर्तमान- खण्डज्यातः पूर्वस्थापितजीवायाः पराधिकास्तावत्यः खण्डज्याः पूर्वस्थापित- जीवायां प्रक्षेप्याः । पुनरन्तरखण्डज्यया केन्द्रभुक्तिकलाशेषं निहत्य मख्या विभज्य लब्धजीवकलाः पूर्वगृहीतजीवासु प्रक्षेप्याः । इति वा ग्रहणक्रमः । पुनस्तां जीवां स्वपरिधिहतामशीत्या विभज्य लब्धं पूर्ववन्मृगादौ मध्यभुक्ते- र्विशोधयेत् । कर्क्यादौ प्रक्षिपेत् । स्फुटभुक्तिर्भवति ॥१५॥१६॥१७॥

पूर्वदिनभोगस्योत्तरदिनभोगस्य च स्वरूपमाह—

ह्यस्तनाद्यतनयोपि( र्वि )शेषोऽतीतभोगतः ।
श्वस्तनाद्यतनयोश्च भाविभोगः प्रकीर्तितः ॥ १८ ॥

ह्यस्तनेति ॥ १८ ॥

कोट्याः पदवशाद्धित्वा युक्त्वा वाऽन्त्यफलं पुनः ।
तद्वर्गबाहुवर्गस्य योगात्कर्णपदं भवेत् ॥ १९॥

कोट्याः पदवशादिति । अत्र भुजामशीत्या ( ८० ) विभज्य यल्ल-भ्यते तदन्त्यफलमित्युच्यते । आद्यपदे चतुर्थतः स्वपरिधिहता द्वितीयतृतीयप-दयोरन्त्यफलं कोटिज्यातः शोधयेत् । एवं सिद्धायाः कोटिज्याया बाहुज्यायाश्च वर्गयोगपदं कर्णो भवति ॥ १९ ॥

तस्याविशेषकरणमाह—

*कर्णेनान्त्यफलं हत्वा विष्कम्भार्धेन लभ्यते ।
पूर्वकोट्यां धनर्णं स्याद्यावान्कर्णः समो भवेत् ॥२०॥

कर्णेनान्त्यफलमिति । प्रथमानीतमन्त्यफलं कर्णेन निहत्य त्रिज्यया विभजेत् । तत्र लब्धमन्त्यफलं भवति । पुनस्तेनान्त्यफलेन प्रथमसिद्धभुजां कोटिज्यां च प्राग्वत्कर्णमानयेत् । पुनस्तेन कर्णेन प्रथमसिद्धमन्त्यफलं निहत्य त्रिज्यया विभज्य लब्धेनान्त्यफलेन कर्णमानयेत् । एवं पुनः पुनः कृत्वा कर्ण-मविशेषयेत् ॥ २० ॥

प्रतिमण्डलस्फुटमाह—

भुजज्याभिहता त्रिज्या कर्णेनाऽऽप्तधनुः क्रमात् ।
केन्द्रात्पदविभागेन धनं स्वोच्चे प्रकल्पयेत् ॥ २१ ॥

भुजज्याभिहतेति । भुजज्यया त्रिज्यां निहत्याविशेषकर्णेन विभज्य लब्धं चापीकृत्य वक्ष्यमाणविधिना स्वमन्दोच्चे धनं कुर्यात् । स स्फुटरवि-र्भवति ॥ २१ ॥

तत्प्रकारमाह—

तदेव केवलं पूर्वं चक्रार्धं तेन वर्जितम् ।
चक्रार्धं तच्च संशुद्धं चक्रोच्चः स स्फुटो रविः ॥ २२ ॥

तदेव केवलमिति । प्रथमपदे तच्चापमेव स्वोच्चे क्षेप्यम् । द्वितीयपदे तच्चापं चक्रार्धाद्विशोध्य शिष्टं स्वोच्चे क्षेप्यम् । तृतीयपदे चक्रार्धयुतं तच्चापं क्षेप्यम् । चतुर्थपदे तच्चापं चक्राद्विशोध्य शिष्टं क्षेप्यम् । एवं सिद्धं मन्दोच्चं स्फुट-रविर्भवति । इह चापीकरणदोषात्कुत्रचिदस्य स्थौल्यं संभवति । स्फुटचापे गृहीते सदा सूक्ष्ममेव भवति ॥२२॥

कर्क्यादौ यदा कोटिज्याऽन्त्यफलतुल्या भवति तदा प्रथमपदावसानं कल्प्यम् । तथा चतुर्थपादारम्भश्च । एवं प्रतिमण्डलसंसिद्धिः कीर्तितेत्याह—

---

*ग्रहगणिते. स्पष्टा. २६

प्रतिमण्डलसंसिद्धिरेषा सम्यक् प्रकीर्तिता ।
स्वान्त्यं फलं च सर्वेषामुच्यते प्रतिमण्डलम् ॥ २३ ॥

प्रतिमण्डलेति । अन्त्यफलं च सर्वेषामित्यस्यार्थो गोलविवेक एव निरूप्यः॥२३॥

÷प्रतिमण्डले भुजाविवरसंस्कारमाह—

स्फुटस्वदेशमध्यार्कविश्लेषान्तरसंगुणा ।
भुक्तिश्चक्रकलाप्राप्ता पूर्ववत्तद्भुजान्तरम् ॥ २४ ॥

स्फुटस्वदेशेति । स्वदेशसाधितस्फुटार्कमध्यमार्कयोरन्तरलिप्ताः स्फुटभुक्तिहताश्चक्रकलाभक्ताः स्फुटरवौ पूर्ववन्मेषतुलादावृणधने कुर्यात् । एतद्भुजाविवराख्यं कर्म भवति ॥ २४ ॥

चरदलप्राणानयनमाह—

त्रयोदशहता जीवा त्रिस्फुटस्य विवस्वतः ।
द्वात्रिंशता हृता क्रान्तिः परिशेषस्तु पूर्ववत् ॥ २५ ॥

त्रयोदशहतेति । त्रिस्फुटस्य विवस्वतो देशान्तरभुजाप( विव )रसंस्काराभ्यां युतस्य स्फुटीकृतस्य रवेर्भुजज्या त्रयोदश(१३)हता द्वात्रिंशता(३२) विभक्ता क्रान्तिर्भवति । अत्राप्ययनचलनयुतोऽर्को गृह्यते । परिशेषस्वाहोरात्रार्धाभ्या[ मा ]नयनविधिः पूर्ववद्वेद्यः ॥ २५ ॥

×चरसंस्कारमाह—

चरप्राणहता भुक्तिरहोरात्रासुभाजिता ।
उदयास्तगयोः शुद्धिः क्षेपश्चोत्तरगे रवौ ॥ २६ ॥

चरप्राणेति । रवेश्चरदलप्राणैः स्फुटभुक्तिर्निहत्याहोरात्रासुभिर्विभज्य लब्धमुत्तरगोले सूर्यस्योदये रवौ शोध्यम् । अस्तमये क्षेप्यम् । दक्षिण उदये क्षेप्यमस्तमये शोध्यम् ॥ २६ ॥

व्यत्ययो दक्षिणे भानामन्येषामनुपाततः ।
फलं भास्वद्वशाद्विद्धि क्षेपः शोधनमेव वा ॥ २७ ॥

अन्येषामनुपातत इति । अन्येषां ग्रहाणामित एव चरदलात्त्रैराशिकेन चरदलभोगावाप्तिः। स्वस्वभुक्तिहतादर्कचरदलादहोरात्रासुभिर्लब्धं चरदलभोगस्य फलं भवति । तस्याऽऽदित्यस्य कालवशाद्गोलवशाच्च धनशोधने वेद्ये ॥२७॥

---

÷ग्रहगणिते. स्पष्टा. ६१ खंडखाद्यके. तिथ्या. १६ गोला. स्पष्टा. ४३ सूर्य. स्फुटगति ४६ सूर्य. स्फुटगति ४६ लघ्वार्य. स्पष्टा. १६

×ग्रहगणिते. स्पष्टा. ५२ सिद्धांतशेखरे. स्फुटा. ६९–७० सूर्य. स्पष्टा. ६३ ब्राह्म. स्पष्टा. ५६ लघुभास्करीये लघ्वार्य. स्पष्टा. २०

दिनार्थ(र्ध)प्रमाणमाह—

उदक्परार्धसंयुक्तो वादोऽहोरात्रसंभवः ।
दिनार्धं दक्षिणे हीनं रात्र्यर्धं तद्विपर्ययात् ॥ २८ ॥

उदक्परार्धेति ॥ २८ ॥

चन्द्रस्फुटकर्माऽऽह—

सूर्यबाहुहता भुक्तिर्मध्यचन्द्रकलाहृता ।
भास्करस्य वशात्क्षेपः शुद्धिर्वाऽपि निशाकृतः ॥ २९ ॥
शेषं विवस्वता तुल्यं कर्म चन्द्रस्य कीर्तितम् ।
भास्वद्भुजाफलेनैव शेषाणां तु प्रकल्पयेत् ॥ ३० ॥

सूर्यबाहुहतेति । एष भुजाविवरसंस्कारो धनशोधने तस्य भास्करस्य कालगोलवशाद्देशान्तरसंस्कारयुते मध्यम एष कार्यः । शेषं कर्म भास्वता तुल्यं मन्दोच्चशोधनभुजाफलानयनकर्णानयनादि सूर्यवद्वेद्यम् । शेषाणां ग्रहाणामपि भुजाविवरमर्कवदित्याह—भास्वदिति ॥ २९ ॥ ३० ॥

तिथ्यानयनमाह—

स्फुटार्थोनः(र्केण)शशी छेद्यो लिप्ताभिः खद्विभूधरैः ।
तिथयस्तत्र लभ्यन्ते शेषं षष्ट्या समभ्यसेत् ॥ ३१ ॥
छिन्द्याद्भुक्तिविशेषेण घटीविघटिकासवः ।
तिथिः शेषो गतो वाऽपि निर्दिष्टो भास्करोदयात् ॥ ३२ ॥

स्फुटार्केणेति ॥ ३१ ॥ ३२ ॥

करणान्याह—

तिथ्यर्धहारलब्धानि करणानि *बवादितः ।
विरूपाणि सिते पक्षे सरूपाण्यसिते विदुः ॥ ३३ ॥
लिप्तीकृतो ग्रहश्छेद्यः शरैरष्टाभिराप्यते ।
ज्योतिषां निचयो यातो भुक्त्या शेषाद्घटीर्विदुः ॥ ३४ ॥

तिथ्यर्धहारेति । असिते पक्षे राशिषट्कमपास्य शेषात्सिद्धकरणानि सरूपाणि स्युः ॥ ३३ ॥ ३४ ॥

---

*श्रीपतिभट्टविरचित ज्योतिषरत्नमाल—करणप्रकरणे

बवाह्वयं बालवकौलवाख्ये ततो भवेत्तैतिलनामधेयम् ।
गराभिधानं वणिजं च विष्टिरित्याहुरार्याः करणानि सप्त ॥

व्यतीपातमाह—

**सूर्येन्दुयोगे चक्रार्धे व्यतीपातोऽथ वैधृतः।**
**चक्रे मैत्रे च पर्यन्ते विज्ञेयः सार्पमस्तकः॥ ३५॥**

सूर्येन्दुयोग इति। चक्रार्धे सूर्येन्दुयोगे वैधृतश्चकाराद्व्यतीपातश्च। मैत्रस्योत्तरार्धे सार्पमस्तकाख्यो व्यतीपातः॥ ३५॥

अत्र चक्रार्धव्यतीपातस्य लक्षणविशेषमाह—

**नानायने व्यतीपातस्तुल्यापक्रमयोस्तयोः।**
**उद्देशस्तस्य चक्रार्धे विक्षेपादधिको नतम्॥ ३६॥**

नानायन इति। तयोः सूर्येन्द्वोस्तुल्यापक्रयोः सतोर्नानायने तयोरयने भिन्ने च सत्येव व्यतीपातः स्यात्। तस्य, उद्देशप्रदेशश्चक्रार्धे सूर्येन्दुयोगे चक्रार्धे स भवतीत्यर्थः। अत्र तुल्यताऽपक्रमस्य गोलतः संख्यया च। एकगोलतयोस्तुल्यापक्रमयोः सूर्येन्द्वोः सतोरित्यर्थः॥ ३६॥

कुजादीनां स्फुटविधिमाह—

**तिग्मांशुकेन्द्रवज्जीवा क्रमशश्चोत्क्रमादपि।**
**भुजाकोट्यादिसिद्धिश्च विशेषोऽतोऽभिधास्यते॥ ३७॥**

तिग्मांशुकेन्द्रवदिति। कुजादीनां केन्द्रेऽपि तिग्मांशुकेन्द्रवद् भुजायाः क्रमज्याग्रहणं कोट्या उत्क्रमज्याग्रहजं च वेद्यम्। भुजाकोट्योर्विभागधनशोधने च तथा यत्पुनस्तेषां सूर्याद्विशेषः स इहाभिधास्यते॥ ३७॥

तद्विशेषमाह—

**स्ववृत्ता स्वोत्तरगुणा पदयोरोजयुग्मयोः।**
**क्रमाक्रमात्त्रिमौर्वा(र्व्या)प्तं परिधौ परिकल्पयेत्॥ ३८॥**

**क्षयोऽधिकयुतीहीने परिधिः स्यात्स्फुटा मता।**
**तेनाऽऽहते ग्रहेन्द्रज्यां छित्वाऽशीत्या फलं विदुः॥ ३९॥**

स्ववृत्तेति। ओजपदे भुजायाः क्रमज्यामानीय, ओजयुग्मपदपठितयोर्वृत्तयोरन्तरेण निहत्य व्यासार्धेन विभज्य लब्धमोजपदवृत्ते धनमृणमपा-(र्णं वा)कुर्यात्। युग्मवृत्तादून ओजवृत्ते तस्मिन् धनं कुर्यात्। आधिक ऋणं कुर्यात्। तदोजपदे स्फुटवृत्तं भवति। युग्मपदे तु कोट्या उत्क्रमज्यामानीय

वृत्तान्तरेण निहत्य व्यासार्धेन विभज्य लब्धं युग्मपदवृत्ते धनमृणं वा कुर्यात् युग्मवृत्ते हीने तस्मिन् धनं कुर्यात् । अधिक ऋणं कुर्यात् । तद्युग्मपदे स्फुटवृत्तं भवति । तेनाऽऽहतेति । तेन स्फुटवृत्तेनाऽऽहतामिष्टकेन्द्रजातां क्रमज्यामुत्क्रमज्यां वाऽशीत्या विभजेत् । तत्र लब्धं ज्याफलं भवति ॥३८॥३ ॥

स्फुटक्रममाह—

*स्वमन्दकेन्द्रस्थं(सं)प्राप्तं फलं चापार्धमिष्यते ।
पदक्रमाद्यथा भानोः स्वमध्ये तद्विधीयते ॥ ४० ॥

स्वमन्दकेन्द्रेति । प्रथमं मन्दोच्चं विशोध्य मन्दकेन्द्रमानीय तस्मादाप्तं भुजाफलं चापीकृत्य तच्चापार्धं मध्यम ऋणं धनं वा कुर्यात् । रविवन्मेषादावृणं तुलादौ धनमित्यर्थः । उत्क्रममर्कग्रहणे तदर्धं पूर्ववत्कार्यम् ॥ ४० ॥

शीघ्रं केन्द्रफलाभ्यस्तं विष्कम्भार्धं विभाजयेत् ।
स्वकर्णेनाऽऽप्तचापार्धं कार्यं तस्मिन्विपर्ययात् ॥४१॥
तस्मिन्मन्दफलं कृत्स्नं कार्यमिष्टं स्वमध्यमे ।
एवं भौमार्कजीवानां विज्ञेयाः स्फुटमध्यमाः ॥ ४२ ॥

शीघ्रमिति । मन्दफलार्धसंस्कृतं मध्यमं पृथक शीघ्रोच्चाद्विशोध्य बाहोः कर्मज्याफलं कोट्या उत्क्रमज्याफलं च स्फुटवृत्तगुणनादि कृत्वाऽऽनीय शीघ्रकर्णं च मन्दकर्णवत्सकृदानीय पुनर्भुजाफलं व्यासार्धेन निहत्य शीघ्रकर्णेन विभज्य लब्धश्चापीकृत्य तदर्धं मन्दफलार्धसंस्कृते मध्यमे केन्द्रे मेषादिके धनं कुर्यात् । तुलादिक ऋणं कुर्यात् । पुनस्तस्मान्मन्दोच्चं विशोध्य फलमानीय चापीकृत्य तत्स[कलं] केवलमध्यमे कुर्यात् । स्फुटमध्यमसंज्ञं भवति । एवं भौमार्किजीवानां स्फुटमध्यमाः साध्याः ॥ ४१ ॥ ४२ ॥

स्फुटमध्यमस्य स्फुटकरणमाह—

तद्विहीनफलोत्पन्नफलं चापेन संस्कृतः ।
स्फुटमध्यस्फुटो ज्ञेयः शेषयोरुच्यते विधिः ॥ ४३ ॥

तद्विहीनच(फ)लोत्पन्नेति । स्फुटमध्यमं शीघ्रोच्चाद्विशोध्य शीघ्रफलचापमानीय तत्सकलं स्फुटमध्यमे शीघ्रन्यायेन कुर्यात् । स स्फुटो भवति ॥ ४३ ॥

*सूर्य. स्पष्टा. २९

अथ शेषयोर्बुधशुक्रयोर्विधिरुच्यते—

+शीघ्रस्यावाप्तचापार्धं युक्तहीनो विपर्ययात् ।
मन्दोच्चस्फुटमध्यस्य कर्ता शीघ्रस्फुटं पुनः ॥ ४४ ॥

शीघ्रस्याये(स्ये)ति । प्रथमं मध्यमं शीघ्रोच्चाद्विशोध्य शीघ्रफलचापमानीय तदर्धं स्वकीयमन्दोच्च ऋणधनव्यत्ययेन कुर्यात् । तन्मन्दोच्चं मध्यमाद्विशोध्य तस्मान्मन्दफलचापमानीय तत्सकलं केवलमध्यमे कुर्यात् । स स्फुटमध्यमो भवतीत्यर्थः । तं शीघ्रोच्चाद्विशोध्य शीघ्रचापमानीय तत्सकलं स्फुटमध्यमे कुर्यात् । स स्फुटो भवति । तदुक्तं—शीघ्रोच्चात्स्फुटं विदुरिति ॥ ४४ ॥

प्रतिमण्डलस्फुटकरणमपि विपश्चिता ताराग्रहाणामपि कर्तव्यमित्याह—

प्रतिमण्डलकर्मापि योज्यमत्र विपश्चिता ।
मन्दोच्चे पूर्ववत्कुर्याच्छीघ्रोच्चं तद्विशोधयेत् ॥ ४५ ॥

प्रतिमण्डलेति । तत्प्रकारमाह——मन्दोच्च इत्यादिना । मध्यमान्मन्दोच्चं विशोध्य भुजज्यां कोटिज्यां चाऽऽनीय वृत्तस्फुटं च कृत्वा स्फुटवृत्तनिहता...ज्यामशीत्या विभज्य लब्धमत्यन्त( न्त्य )फलं कोटिज्यायां धनमृणं वा पूर्ववत्कृत्वा तद्वर्गभुजज्यावर्गयोर्योगामूलमानयेत् । स प्रतिमण्डलकर्णः । तं पूर्ववदविशेषयेत् । पुनर्भुजज्यां त्रिज्यया निहत्याविशिष्टेन मन्दकर्णेन विभज्य लब्धं चापीकृत्य मन्दोच्चे पूर्ववत्तमेव केवलमित्यादिना धनं कुर्यात् । स मन्दसिद्धः स्यात् । शीघ्रस्फुटे तु शीघ्रोच्चाद्यथोदितं मध्यमं विशोध्य भुजाभ्यां कोटिज्यां चाऽऽनीय ( तेन कोटिज्याभुजज्याभ्यां च पूर्ववत्प्रतिमण्डलकर्णं ) वृत्तं च स्फुटीकृत्य तेन निहता(द्) व्यासार्धादन्त्यफलमानीय तेन कोटिज्याभुजज्याभ्यां च पूर्ववत्प्रतिमण्डलकर्णं सकृदानीय पुनर्भुजज्यां त्रिज्यया निहत्य सकृदानीतशीघ्रकर्णेन विभज्य लब्धं चापीकृत्य तच्चापं तदेव केवलमित्यादिना विधिना शीघ्रोच्च ऋणं कुर्यात् । स शीघ्रसिद्धो भवति ॥ ४५ ॥

शोधनप्रकारमाह—

तदेव केवलं योज्यं पदयोः पूर्ववच्चलात् ।
चक्रार्धसंयुतश्चापं चक्राच्छोध्यश्च शेषयोः ॥ ४६ ॥

---

+सूर्य. स्पष्टा. ४४

तदेवेति । अस्यायमर्थः—प्रथमपदे तदेव केवलमिति पूर्वोक्तविधिना तच्चा-
पमेव शीघ्रोच्चाच्छोध्यते । द्वितीयपदे तु चक्रार्धं तेन वर्जितमिति पूर्ववत्तच्चा-
पहीनं चक्रार्धं विशोध्यते । एवं पूर्वपदयोः पूर्ववत्कुर्यात् । उत्तरपदयोश्च
तद्वदाह ॥ ४६ ॥

**चक्रार्धसंयुतमाह—**

**स्फुटवृत्तगुणां त्रिज्यां हृत्वाऽशीत्या स्वकोटितः ।**
**त्यक्त्वा पदेषु युक्त्वा वा कर्णः प्राग्वत्प्रसाध्यते ॥ ४७ ॥**

स्फुटवृत्तगुणामिति ॥ ४७ ॥

अथ स्फुटकर्मप्रकारमाह—

**मन्दोच्चसिद्धतन्मध्यविश्लेषार्धसमन्वितः ।**
**मन्दसिद्धेऽधिके हीने रहितो मध्यमो ग्रहः ॥ ४८ ॥**
**स शीघ्रोच्चात्पुनः साध्यः सिद्धयोरन्तरा भुजम् ।**
**अर्धीकृत्य सकृत्सिद्धे पूर्ववत्परिकल्पयेत् ॥ ४९ ॥**
**एवं कृतस्य भूयोऽपि मन्दासिद्धिं समाचरेत् ।**
**मन्दासिद्धस्य तस्यायं विश्लेषोऽतो विधास्यते ॥ ५० ॥**
**ततो द्विसिद्धमन्दस्य द्विसिद्धस्य यदन्तरम् ।**
**प्राग्वत्तन्मध्यमे कृत्वा शीघ्रसिद्धः स्फुटो ग्रहः ॥ ५१ ॥**
**एवमारार्किजीवानामाख्यातं प्रतिमण्डलम् ।**
**शेषयोरप्य[यं] सम्यगुच्यते यो विधिक्रमः ॥ ५२ ॥**

मन्दोच्चसिद्धेति । प्रथमं मन्दोच्चं मध्यमाद्विशोध्य प्रतिमण्डलविधिना
मन्दस्फुटमानयेत् । पुनस्तन्मन्दस्फुटमध्यमयोर्विश्लेषमन्धी(र्धी)कृत्य मध्यमे धन-
मृणं वा कुर्यात् । मन्दसिद्धेऽधिके धनं कुर्यात् । मन्दसिद्ध ऊन ऋणं कुर्यात् ।
स सकृत्सिद्ध इत्युच्यते । पुनस्तमनष्टं कृत्वा शीघ्रोच्चाद्विशोध्य शीघ्रन्यायेन
शीघ्रस्फुटमानयेत् । शीघ्रसिद्धेऽधिके धनमन्यथा ऋणम् । एवं कृतो द्विसिद्धो
भवति । पुनर्द्विसिद्धान्मन्दोच्चं विशोध्य मन्दन्यायेन मन्दस्फुटमानयेत् । सिद्धि-
सिद्धस्य च यदन्तरं तत्सकलं केवलमध्यमे यथाविधि कृत्वा तं शीघ्रोच्चाद्
विशोध्य शीघ्रन्यायेन शीघ्रस्फुटमानयेत् । स स्फुटग्रहो भवति । एवमारार्कि-
जीवानां प्रतिमण्डलस्फुटविधिरुक्तः ॥४८॥४९॥५०॥५१॥५२॥

अथ शेषयोर्बुधशुक्रयोर्विधिक्रम उच्यते—

**शीघ्रोच्चसिद्धतन्मध्यविश्लेषार्धसमन्वितम् ।**
**मध्यादूनेऽधिके हीनं मन्दोच्चं संस्कृते विदुः ॥ ५३ ॥**
**बुधभृग्वोः पुनः साध्यं मन्दमेवं तु कर्मणा ।**
**तेन सिद्धौ चलाद्भूयः स्फुटावेतौ प्रकीर्तितौ ॥ ५४ ॥**

शीघ्रोच्चसिद्धेति । प्रथमं शीघ्रोच्चान्मध्यमं विशोध्य शीघ्रस्फुटमानीय तत्स्फुटमध्यमयोरन्तरार्धं मन्दोच्चे धनमृणं वा कुर्यात् । मध्यान्न्यूने स्फुटे धनमधिक ऋणम् । एवं संस्कृतं मन्दोच्चं मध्यमाद्विशोध्य मन्दस्फुटमानीय तं शीघ्रोच्चाद्विशोध्य शीघ्रस्फुटमानयेत् । स्फुटो भवति ॥५३॥५४॥

अथ कर्णानयने विशेषमाह—

**कोटेरन्त्यफलं शोध्यं न शुध्येद्व्यत्ययात्तदा ।**
**साध्यः कर्णोऽसकृन्मन्दः सकृत्कर्णः स्वशीघ्रजः ॥५५॥**

कोटेरिति । कोट्यां शोध्यं यदन्त्यफलं तन्महत्त्वादशोध्यं यदा भवति तदाऽन्त्यफलात्कोटिं विशोध्य शिष्टं कोटिं प्रकल्प्य पूर्ववत्कर्णः साध्यः । मन्दकर्णोऽविशेषान्तं कार्यः । शीघ्रकर्णः सकृदेव साध्यः ॥ ५५ ॥

अथ वक्राद्यवगमनाय शीघ्रोच्चमाह संस्कारमाह—

**स्फुटमध्यमान्तरदलं मध्यवशाद्दर्णं धनं चले कृत्वा ।**
**वक्रातिवक्रगमने विज्ञेये तन्निवृत्तिश्च ॥ ५६ ॥**

स्फुटमध्यमान्तरेति । मध्यमस्य स्फुटग्रहस्य चान्तरमर्धी( र्धी )कृत्य शीघ्रोच्चे धनमृणं वा कुर्यात् । मध्यमशोधनकल्पनस्फुटान्मध्येऽधिके धनं हीने ऋणमित्यर्थः । तद्वशाद्वक्रातिवक्रगमने वेद्ये ॥ ५६ ॥

तत्प्रकारमाह—

**शीघ्रोच्चात्स्फुटखेचरो निपतिताच्छेषं यदा राशय-**
**श्चत्वारो यदि वक्रगत्यभिमुखः षड्भस्तु वक्रे स्थितः ॥**
**अष्टौ चेत्कुटिलं जहाति विहगः पन्थानमाश्वेव स**
**त्वेष्यातीतविचारिणोर्विवरकं भुक्तिर्भवेदाह्निकी ॥ ५७ ॥**

शीघ्रोच्चादिति । उक्तन्यायेन संस्कृताच्छीघ्रोच्चात्स्फुटखेचरे विशोधिते सति चत्वारो राशयो यदा भवन्ति तदा स ग्रहो वक्रगतावभिमुखो भवति ।

यदा षड्राशयस्तदाऽतिवक्रे तिष्ठति । यदाऽष्टौ राशयस्तदा वक्रं जहाति । एष्यातीतविचारिणोः परदिनपूर्वदिनसाधितयोर्ग्रहयोरन्तरं दिनभुक्तिर्भवति ॥ ५७ ॥

अथ प्रकारान्तरेण स्फुटभुक्त्यानयनमाह—

**मन्दान्त्यजीवागुणितां स्वभुक्तिं**
**भूयः स्ववृत्तेन हतां विभज्य ।**
**राशेः कलाभिर्दशताडिताभि-**
**र्भुक्तौ धनर्णं वद युक्तितोऽर्धम् ॥ ५८ ॥**

मन्दान्त्येति । प्रथमस्फुटे वर्तमानखण्डज्यां बाहुभवां मध्यभुक्त्या निहत्य पुनर्मन्दस्फुटवृत्तेन च निहत्य दशगुणितैकराशिलिप्ताभिर्विभज्य लब्धमर्धी(र्धी)-कृत्य मध्यभुक्तौ धनर्णं कुर्यात् । पदक्रमेण क्षयधनधनक्षयान् कुर्यादित्यर्थः । एवं कृता सकृत्सिद्धा भुक्तिर्भवति । तां पुनः शीघ्रोच्चभुक्तेर्विशोध्य शेषं द्वितीयस्फुटसिद्धभुजावर्तमानखण्डज्यया निहत्य शीघ्रस्फुटवृत्तेन च निहत्य दशताडितराशिकलाभिर्विभज्य लब्धं व्यासार्धेन निहत्य शीघ्रकर्णेन विभज्य लब्धस्य चापार्धं सकृत्सिद्धभुक्तौ शीघ्रन्यायेन धनमृणं वा कुर्यात् । केन्द्रपद-क्रमेण धनक्षयक्षयधनानि कुर्यादित्यर्थः । पुनस्तां भुक्तिं तृतीयस्फुटे वर्तमान-खण्डज्यया निहत्य स्फुटवृत्तेन च निहत्य दशगुणितराशिलिप्ताभिर्विभज्य लब्धं चापीकृतं सकलं मध्यभुक्तौ मन्दन्यायेन धनमृणं वा कुर्यात् । पुनस्तामविनष्टां संस्थाप्य शीघ्रोच्चभुक्तेर्विशोध्य शेषं चतुर्थस्फुटे वर्तमानखण्डज्यया निहत्य स्फुटवृत्तेन च निहत्य दशताडितराशिलिप्ताभिर्विभज्य लब्धं व्यासार्धेन निहत्य शीघ्रकर्णेन विभज्य लब्धं चापीकृत्य तत्सकलं पूर्वस्थापितसंस्कृतभुक्तौ शीघ्र-न्यायेन धनमृणं वा कुर्यात् । सा स्फुटभुक्तिर्भवति । यदा शोध्यं फलं महत्त्वा-दशोध्यं भवति तदा महतोऽल्पं विशोधयेत् । शिष्टं वक्रगतिर्भवति । एवं सुरेज्यमन्दकुजानां गतिविधिः ॥ ५८ ॥

शुक्रबुधयोर्विधिरुच्यते—

शीघ्रोच्चभुक्तेस्तदपास्य शेषात्
केन्द्रान्त्यजीवाविधिना यदाप्तम् ।
त्रिज्याहतं कर्णविभक्तभेदं
न्यायेन शीघ्रस्य धनर्णमिष्टम् ॥ ५९ ॥

तन्मन्दमौर्वीफलचापभुक्ता
सर्वस्वभुक्तौ धनशोधने तु ।
तस्याविनष्टस्य चलोच्चभक्ते-
र्जीवाफलं सर्वमनिष्टराशौ ॥ ६० ॥
एवं ग्रहाणां स्फुटभुक्तिरिष्टा
तस्मान्न शुध्येद्यदि शीघ्रलब्धम् ।
तयोर्विशेषः स्फुटभुक्तिसंख्या
वक्रग्रहोऽसाविति सद्भिरुक्तः ॥ ६१ ॥
एवं सुरेध्वा(ज्या)र्कधरासुतानां
भुक्तिः स्फुटाऽतो भृगुसोमसून्वोः ।
मन्दोच्चकेन्द्रादपि संस्कृताद्धि
शीघ्राद्यजीवाविधिना च लब्धम् ॥ ६२ ॥
तेनैव सर्वेण युते विहीनौ
भोगः स्फुटो यः कथितो विशेषः ।
इयं ग्रहाणां व्यवहारिकी स्या-
द्भुक्तिः स्फुटाऽऽसन्नतरा च नित्या ॥ ६३ ॥

मन्दोच्चकेन्द्रादावि(दपी)ति । शीघ्रान्त्यज्यया गुणिताद्विधिनाऽवाप्तदलेन संस्कृतान्मध्यभोगान्मन्दकेन्द्रान्त्यज्यया गुणिताद्विधिनाऽवाप्तं सकलं मन्दफलसंस्कृते भोगे यथाविधि कुर्यात् । स स्फुटभोगो भवति । इयं भुक्तिरासन्नतरा- स्फुटभुक्तिसमा प्राय इत्यर्थः । व्यवहारिता नित्यं कर्मक्षमेत्यर्थः । आसन्नतरेत्यनेन किंचित्स्थौल्यमपि सूचितम् । तस्याः स्थौल्यहेतुस्तत्प्रक्रिया च भाष्ये द्रष्टव्या ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

अर्केन्द्वोः समलिप्तीकरणमाह—

गन्तव्ययाततिथिशेषहते रवीन्द्वो-
र्भुक्तिक्रमेण दिनशोभ्यविशेषभक्ते ।
लब्धेन युक्तरहितौ शशितिग्मरश्मी
ज्ञेयौ समौ सकललोकविधानहेतुः ॥ ६४ ॥

इति महाभास्करीये चतुर्थोऽध्यायः ॥ ४ ॥

———

गन्तव्येति । पर्वणो गन्तव्यकलाभिः प्रतिपदो गतकलाभिर्वा रवीन्द्वोः स्फुटभुक्तिं निहत्य गत्यन्तरेण विभज्य लब्धा लिप्ता गन्तव्यकलाश्चेत्सूर्येन्द्वोः क्षप्याः । गतकलाश्चेच्छोध्याः । तदा कौ ( तौ ) समलिप्तौ भवतः ॥ ६४ ॥

इति परमेश्वरकृतायां कर्मदीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ ग्रहणाध्याय उच्यते ।

**भास्वतो ग्रहणं वाच्यमाचार्यार्यभटोदितम् ।**
**तस्य चाऽऽदौ विजानीयादुपायानां विनिश्चयम् ॥ १ ॥**

तत्रादावुपायानां बिम्बव्यासकर्णादीनां विनिश्चं ( श्चितं ) स्वरूपं जानीयादित्याह—भास्वत इति ॥ १ ॥

तत्र रवीन्द्वोर्मध्ययोजनकर्णमाह—

**पञ्चाष्टरन्ध्रभूतेषुवेदाः कर्णो विवस्वतः ।**
**सप्तपर्वतरामाब्धिगुणसंख्या निशाकृतः ॥ २ ॥**

पञ्चाष्टेति । पञ्चादिवेदान्ता विवस्वतो योजनकर्णः । सप्तपर्वताभ्यां निशाकृतः कर्णः ॥ २ ॥

अनयोः स्फुटीकरणमाह—

**कलाकर्णहतावेतौ विष्कम्भार्धविभाजितौ ।**
**स्फुटयोजनकर्णौ तौ सूर्याचन्द्रमसोर्विदुः ॥ ३ ॥**

कलाकर्णेति । कलाकर्णो विशेषकर्णः । विष्कम्भार्धं त्रिज्या ॥ ३ ॥

अर्केन्दुभुवां बिम्बस्य व्यासयोजनान्याह—

**दिग्वेदसागरा भानोरिन्दोस्तिथिहुताशनाः ।**
**योजनैरुच्यते सद्भिर्भुवा(र्भुव्या)सः खेषुपङ्क्तिभिः ॥ ४ ॥**

दिग्वेदेति । योजनैरिति । योजनमानेनात्र बिम्बव्यासा उक्ता इत्यर्थः ॥ ४ ॥

सूर्येन्द्वोर्बिम्बकलानयनमाह—

**विष्कम्भार्धहतौ व्यासौ स्फुटयोजनभाजितौ ।**
**भवतस्तौ कलाव्यासावुष्णशीतगुतेजसोः ॥ ५ ॥**

विष्कम्भार्धहताविति । एतौ योजनव्यासौ त्रिज्याहतौ स्फुटयोजनकर्णभक्तौ( क्तौ ) लिप्तव्यासौ भवेतामिति ॥ ५ ॥

अथ सूर्येन्द्वोः स्फुटभुक्तिभ्यां तयोर्बिम्बकलानयनं चन्द्रभुक्त्या तमोबिम्बकलानयनमाह––

नवांशाः पञ्च भोगस्य भूतवर्गांश एव च ।
स्वतुरीयविलिप्ताभिर्युक्तहीने तनुस्फुटे ॥ ६ ॥
सूर्याचन्द्रमसोर्विद्धि राहुबिम्बं च कथ्यते ।
पङ्क्त्यांशश्चन्द्रभोगस्य षोडशांशोनलिप्तिकाः ॥ ७ ॥

नवांशाः पञ्चेति । सूर्यस्य स्फुटभुक्तिकलाः पञ्चगुणिता नवभिर्भक्तास्तस्य बिम्बकला भवन्ति । चन्द्रस्फुटभुक्तिकलाः पञ्चविंशतिभक्तास्तस्य बिम्बकला भवन्ति । तत्र रविबिम्बकलाचतुर्थांशतुल्यविलिप्तास्तस्मिन्बिम्बे देयाः । चन्द्रबिम्बकलातश्चतुर्थांशतुल्यविलिप्तास्तस्मिञ्शोध्याः । भुक्तिकलाभ्यां दशभिर्विभज्य लब्धास्तमोबिम्बकला भवन्ति । तद्बिम्बकलाभ्यः षोडशांशतुल्या विलिप्तास्तद्बिम्बे देयाः स्युः ॥ ६ ॥ ७ ॥

अथ मध्यलग्नानयनमाह––

अथातो मध्यलग्नस्य विधानं संप्रवक्ष्यते ।
निरक्षासुभिरुत्पत्तिर्बोद्धव्या शास्त्रकोविदैः ॥ ८ ॥

अथातो मध्यलग्नस्येति । तस्योत्पत्तिं निरक्षासुभिर्भवति । लङ्कोदयासुभिः साध्या...त्यर्थः ॥ ८ ॥

तत्प्रकारमाह––

पूर्वाह्णे सूर्ययुक्तस्य गतभागासवो हि ये ।
गन्तव्यानां चापराह्णे भागानामसवः स्मृताः ॥ ९ ॥
मध्यं तिथ्यन्तरा...भ्यः शोध्या भागाश्च भास्करे ।
शोध्या देयाश्च भूयोऽपि निरक्षासुवशाद्रवौ ॥ १० ॥
राशयः कालतत्त्वज्ञैरनुपाताप्तमेव च ।
मध्यलग्ना...श्रीमद्भट्टमुखोदितम् ॥ ११ ॥
कक्ष्याभेदाच्चर्ची(?)भावो जीवाभेदः प्रकीर्तितः ।
ज्ञापनं च स्वदृक्क्षेपौ...त्यादिवचनं प्रभोः ॥ १२ ॥

पूर्वाह्ण इति । पूर्वाह्णे सूर्यस्य गतभागान् लङ्कोदयासुभिर्निहत्य त्रिंशता विभज्य लब्धानसून् द्युगतदिनार्धयोर्विवरासुभ्यः संशोध्य रवेर्गतभागान् विशो-

धयेत्। शिष्टासुभ्यश्च रविस्थितराशेरुत्क्रमेण लङ्कोदयासवो यथासंभवं संशोध्याः। रवौ च तावन्तो राशयः शोध्याः। पुनः शेषासूंस्त्रिंशता निहत्य वर्तमानराश्यसुभिर्विभज्य लब्धान् भागाञ्शोधितराशौ सूर्ये विशोधयेत्। तन्मध्यलग्नं भवति। अपराह्णे तु सूर्यस्य गन्तव्यभागलब्धानसून् द्युगतदिनार्धयोन्तरालगतेभ्यो नतासुभ्यो विशोध्य सूर्ये गन्तव्यं प्रक्षिप्य शेषात्क्रमेण लङ्कोदयासून् विशोध्य सूर्ये च तावतो राशीन्प्रक्षिप्य शेषात्त्रिंशद्गुणिताद्वर्तमानलङ्कोदयासुभिर्विभज्य लब्धान् भागान् सलिप्तान्प्रक्षिप्य राशौ सूर्ये प्रक्षिपेत्। तन्मध्यलग्नं भवति। सायनसूर्येणैवं लध्यलग्नमानीय पुनरयनचलनं विशोधयेत्। एवं मध्यलग्नमुक्त्वा सूर्येन्द्वोर्विक्षेपकृत उक्तः। स्वदृक्क्षेप इत्येतदार्यभटस्य वचनं ज्ञापकमेवं जीवाभेदेऽस्ति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

रवेरुदयज्यानयनमाह—

**बाहुज्योदयलग्नस्य परक्रान्तिहता हृता।**
**लम्बकेनोदयज्याऽऽप्ता कक्ष्यायां भास्वते स्फुटः ॥ १३ ॥**

बाहुज्येति। सायनलग्नस्य बाहुज्यां परमक्रान्त्या निहत्य लम्बकज्यया विभजेत्। तत्र लब्धं सूर्यस्य कक्ष्यायामुदयज्या भवति। सूर्यस्योदयज्येत्यर्थः ॥ १३ ॥

चन्द्रस्योदयज्यामाह—

**सैंहिकेयविहीनस्य जीवा लग्नस्य ताडिता।**
**तिथिभिश्चन्द्ररन्ध्रैकैर्विक्षेपज्या विलग्नजा ॥ १४ ॥**
**विलग्नक्रान्तिपक्षे वा धनुषोस्तुल्यदिक्कयोः।**
**युक्तिर्वियुक्तिरन्यत्वे शेषकाष्ठगुणा गता ॥ १५ ॥**

सैंहिकेयेति। राहुहीनस्योदयलग्नस्य भुजज्यां तिथिभिर्निहत्य चन्द्ररन्ध्रैकैर्विभज्य लब्धं लग्नविक्षेपज्या भवति। पुनर्ल...दिशोऽन्तरं कृत्वा तस्य जीवामानीय व्यासार्धेन निहत्य लम्बकेन हरेत्। तत्र लब्धं चन्द्रकक्ष्यायामुदयज्या भवति। चन्द्रस्योदयज्येत्यर्थः ॥ १४ ॥ १५ ॥

चन्द्रस्य मध्यज्यानयनार्थं( र्थं ) मध्यलग्नाच्च विक्षेपज्या साध्या तदाह—

**उदयज्येन्दुकक्ष्यायां व्यासार्धं लम्बकोद्धृतम्।**
**राहूनमध्यलग्नाच्च विक्षेपज्या प्रसाध्यते ॥ १६ ॥**

राहूनेति । लग्नविक्षेपवन्मध्यलग्नविक्षेपः साध्यः ॥ १६ ॥

मध्यज्यानयनमाह—

मध्यक्रान्तिविषुवज्ज्यातद्वयोरेकादिक्कयोः ।
योगो वियोगो वाऽन्यत्वे मध्यज्याशेषादि[ग्व]शात् ॥१७॥

मध्यक्रान्तीति । मध्यलग्नस्य क्रान्तिज्यामानीय चापीकृत्याक्षज्यां च चापीकृत्य तयोस्तुल्यदिशोर्योगं कृत्वा भिन्नदिशोरन्तरं कृत्वा तज्जीवामानयेत् । सा रवेर्मध्यज्या भवति । अक्षज्या नित्यदक्षिणा । तत उत्क्रान्तिरधंशिष्टा चेदुत्तरमध्यज्या । अन्यथा दक्षिणा । इन्दोर्मध्यज्यामाह—इन्दोः पलक्रान्तीति । मध्यलग्नस्य क्रान्तिचापविक्षेपचापयोरक्षचापस्य च तुल्यदिक्त्वे योगः । भिन्नदिक्त्वेऽन्तरं कृत्वा तज्जीवामानयेत् । सा चन्द्रस्य मध्यज्या भवति । शिष्टचापवशात्तस्या अपि दिग्भवति ॥ १७ ॥

दृक्क्षेपज्यानयनमाह—

स्वमध्यो(ध्यज्यो)दयाभ्यासाद्विष्कम्भार्धाप्तवर्गितात् ।
मध्यज्यावर्गतोऽपास्य स्वदृक्क्षेपं पदं विदुः ॥ १८ ॥
गतगन्तव्यनाडीभिर्भज्यात्पूर्वोक्तकर्मणा ।
साध्या भवेच्छशाङ्कस्य विधानमिदमुच्यते ॥ १९ ॥

स्वमध्यज्येति । स्वमध्यज्यां स्वोदयज्यया निहत्य व्यासार्धेन विभज्य लब्धं वर्गीकृत्य स्वमध्यज्यावर्गतः संशोध्य शिष्टं मूलीं कुर्यात् । तत्स्वदृक्क्षेपज्या भवति । गतगन्तव्यनाडीभिः पूर्ववच्छङ्कुमानीय दृश्या( ग्ज्या )मुत्पादयेत् ॥ १८ ॥ १९ ॥

तत्र चन्द्रस्य विशेषमाह—

समलिप्तेन्दुविक्षेपक्रान्तिज्याचापसंयुतिः ।
वियुक्तिर्विदिशोर्जीवाशेषस्येन्दोरपक्रमः ॥ २० ॥
तेनाहोरात्रविष्कम्भक्षितिजीवाचरासवः ॥
प्रसाध्यास्तैश्च दृग्जीवा गतगन्तव्यकालतः ॥ २१ ॥

समलिप्तेति । समलिप्तेन्दोरपक्रमचापं विक्षेपचापं चाऽऽनीय तुल्यदिशोस्तयोर्योगं कृत्वा भिन्नदिशोरन्तरं कृत्वा जातस्य जीवामानयेत् । सा चन्द्रस्य क्रान्तिज्या भवति । तथा स्वाहोरात्रक्षितिज्याचरदलासूनानीय तैर्गतगन्तव्यासुभिश्च शङ्कुमानीय दृग्ज्यां चाऽऽनयेत् ॥ २० ॥ २१ ॥

दृग्गतिज्यानयनमाह—

स्वदृग्दृग्क्षेपगुणयोर्वर्गविश्लेषजे पदे ।
दृग्गतिज्ये भवेतां ते भास्करामृततेजसोः ॥ २२ ॥

स्वदृग्क्षेपेति । दृगिति *दृग्ज्यादृग्क्षेपज्यावर्गयोर्विश्लेषमूलं दृग्गतिज्या भवति । एवमर्केन्द्वोर्दृग्गतिज्या पृथक् साध्या ॥ २२ ॥

लम्बनलिप्तानयनमाह—

स्वदृग्गतिक्षमाव्यासभेदसंवर्गसंभवम् ।
पृथग्योजनकर्णाप्तं लिप्ताद्युलम्बनं विदुः ॥ २३ ॥

स्वदृग्गतिक्षमाव्यासेति । दृग्गतिज्यां भूव्यासार्धेन निहत्य स्वस्वस्फुटयोजनकर्णेन विभजेत् । तत्र लब्धा लम्बनलिप्ता भवति ॥ २३ ॥

लम्बघटिकानयनं तत्संस्कारप्रकारं चाऽऽह—

तद्विश्लेल(शे)षो हतः षष्ट्या स्फुटभुक्त्यन्तराहृतः ।
घटिकादितिथेः प्राह्णे शुद्धिः क्षेपोऽपरो मतः ॥ २४ ॥

तद्विशेषो हत इति । तासां रविबिम्बलिप्तानां चन्द्रलम्बनलिप्तानां च यो विशेषो विश्लेषोऽर्कलम्बनलिप्ताहीनश्चन्द्रलम्बनलिप्तागण इत्यर्थः । तं षष्ट्या निहत्य भुक्त्यन्तरकलाभिर्विभजेत् । तत्र लब्धा लम्बनघटिका भवन्ति । प्राह्णे लम्बनस्य शुद्धिस्थितिः पर्वणः कार्या । अपराह्णे पर्वणि क्षेपः कार्यः । पूर्वाह्णे लम्बनघटिकाः पर्वान्तनाडीषु ऋणं कुर्यात् । अपराह्णे धनं कुर्यादित्यर्थः ॥ २४ ॥

मध्याह्नकालनिष्पन्नलम्बनस्य +धनर्णविभागमाह—

दिनार्धकालनिष्पन्नमिति । मध्याह्नेऽपि लम्बनं संभवति । इन्द्वावुद्गगत उदयज्यायां चोदग(ग्ग)तायां तल्लम्बनं शोध्यं भवति । इन्दुशब्दोऽत्र मध्यज्याप्रदर्शकः । अतो मध्यमज्यायामुदयज्यायां च तुल्यदिग्गतायां शोध्यं भवति । भिन्नदिग्गतायां क्षेप्यं भवतीत्यत्रोक्तं भवति । गीयते तत्र दक्षिणे इत्यनेन । एकस्यामुत्तरस्थायामन्यस्यां दक्षिणस्थायां च क्षेप्यमित्युक्तं भवति ।

लम्बनाविशेषकरणमाह—

एवं पुनः पुनः कर्मेति । लम्बनसंस्कृतपू(प)र्वान्तकाले चन्द्राकावानीय उदयलग्नं मध्यलग्नं च तत्काले आनीय दृग्ज्यां च तत्काले आनीय तैर्लम्बनलिप्तास्तद्घटिकाश्च पूर्ववदानीय ता घटिकाः प्रथमानीतपर्वघटिकासु धनर्णं

*आर्यभटीये.गोल.३४, सूर्य. सूर्यग्रह६,लघुसूर्य६, +ग्रहगणिते. सूर्य२, लघुमानसे. ग्रह...

वा कुर्यात् । पुनस्तत्काले रविचन्द्रादीनानीय तत्सिद्धा लम्बनघटिका अपि प्रथमानीतास्वेव पर्वघटिकासु धनमृणं वा कुर्यात् । यावत्कृते मध्यज्यादिकं सर्वमविशिष्टं तावदेवं कुर्यात् ।

अर्केन्द्वोरवनतिलिप्तानयनमाह—

**तिथिवच्चन्द्रतीक्ष्णांशू संचार्यावेव पण्डितैः ।**
**दृग्क्षेपज्येऽल्पविश्लिष्टे भूव्यासार्धहते हृते ॥ २५ ॥**

दृग्क्षेपज्ये इति । सूर्येन्द्वोरविशिष्टे ये दृग्क्षेपज्ये ते व्यासार्धहते तयोः स्फुटयोजनकर्णाभ्यां भक्ते कार्ये। तत्र लम्बस्थयोरवनतिलिप्ता भवन्ति । स्वस्वमध्यज्यायास्तु या दिग्भवति अवनतेश्च सा दिग्भवति ॥ २५ ॥

तयोर्योगविश्लेषाभ्यां स्फुटावनत्यानयनमाह—

**स्फुटयोजनकर्णाभ्यामवाप्ता लिप्तिकादयः ।**
**अभिन्नाशयोर्विश्लेषस्तासां सूर्यनिशाकृतोः ॥ २६ ॥**

अभिन्नाशयोरिति । सूर्यनिशाकृतोर्मध्यज्ययोरभिन्नाशयोः सतोस्तासां सूर्यावनतिलिप्तानां चन्द्रावनतिलिप्तानां च विश्लेषस्फुटावनतिर्भवति । भिन्नदिशोस्तयोस्तु तासां योगस्फुटावनतिर्भवति ॥ २६ ॥

मध्यज्ययोरथान्यत्वे योगोपनतिलिप्तिकाः ।
दिक् तत्र शशिनो ग्राह्या पातहीनान्निशाकृतः ॥ २७ ॥
ज्यां खसप्ताग्विभिः क्षुण्णां कलाकर्णेन संहरेत् ।
विक्षेपः शशिनः स्पष्टस्तेन युक्ता नतिः स्फुटा ॥ २८ ॥

दिक् तत्र शशिनो ग्राह्येति । तत्र भिन्नदिशोर्योगकरणे शशिनो मध्यज्याया या दिग्भवति, सैव स्फुटावनतेश्च दिग्भवति । विश्लेषकरणे द्वयोस्तुल्यत्वात्संदेहो न भवति । पातहीनादिति श्लोकशेषेण शशिनो विक्षेपानयनमाह—लम्बनसंस्कृतपर्वान्तयुगतकाले चन्द्रमानीय तस्मात्स्वपातं विशोध्य भुजज्यामानीय तां खसप्ताश्विभिर्निहत्य अविशेषकर्णेन विभजेत् । तत्र लब्धं शशिनः स्फुटविक्षेपो भवति । मेषादौ स उत्तरः स्यात् । तुलादौ दक्षिणः । *तुल्यदिक्त्वे विक्षेपनत्योर्योगः कार्यः । भिन्नदिशोस्तु तयोर्विशे(श्ले)षः कार्यः । विश्लेषे शिष्टस्य दिग्ग्राह्या । एवमानीता चन्द्रस्यावनतिः सूर्यग्रहणे स्फुटा भवति ॥ २७ ॥ २८ ॥

अथ नत्यन्तरानयनमाह—

*सिद्धान्तशेखरे सूर्य ९ ।

**तातातयोस्तु विश्लेषशेषाः सा गतिरुच्यते ।**
**लम्बनान्तरसंयुक्तं ग्रहमध्यात्तजन्मनोः ॥ २९ ॥**

लम्बनान्तरेति । मध्यलम्बनमिहोक्तं वक्ष्यति च स्पर्शलम्बनम् । तत्र मध्यलम्बनस्पर्शलम्बनयोरन्तरेण संयुक्ताद्ग्रासमध्यात् । लम्बनसंस्कृतपर्वान्तघुगतासिद्धयोर्दृक्क्षेपक्षेपयोः सिद्धावनतिः स्फुटा भवति । अत्र दृक्क्षेपशब्देनावनतिरुच्यते । अवनतिक्षेपयोर्योगविश्लेषात् सि(सा)ध्येत्यर्थः । पूर्वोक्तावनतिर्व्यावहारिकी कर्मक्षमा भवति । एषा तु न कर्मक्षमा । पारमार्थिकी त्वेषैव इत्येके वदन्ति । अत्र मध्यादित्यनेन बिम्बमध्यादुत्पन्नेत्युक्तं भवति । अन्ये त्वेवं योजयन्ति । स्पर्शमध्यलम्बनयोरन्तरेण संयुक्ताद्ग्रासात्स्पर्शकालात्तथा मोक्षमध्यलम्बनयोरन्तरेण संयुक्ता मध्यान्मध्यकालाच्चाऽऽप्तयोर्दृक्क्षेपक्षेपयोः सिद्धाऽवनतिः क्रमात्स्पर्शमोक्षे च स्फुटाऽवनतिर्भवतीति । अत्र मध्यादित्यनेन मध्यकालादन्यत्रेत्युक्तं भवति ॥ २९ ॥

ग्रहणस्य सदसद्भावावगमनायाऽऽह—

**दृक्क्षेपक्षेपयोः सिद्धा मध्या चावनतिः स्फुटा ।**
**सूर्येन्दुबिम्बसंपर्कदलेन सदृशी नतिः ॥ ३० ॥**

सूर्येन्दुबिम्बेति । सूर्येन्द्वोर्बिम्बयोगार्धतुल्या नतिरवनतिश्चेद्भास्वतो ग्रहणं न स्यात् । तदूनायामवनत्यां ग्रहणं भवति ॥ ३० ॥

*स्थित्यर्धकालानयनमाह—

**ग्रहणं भास्वतो न स्याद्धीनायामस्ति संभवः ।**
**विष्कम्भार्धनतीवर्गविश्लेषपदमागतम् ॥ ३१ ॥**

संपर्का(विष्कम्भा)र्धनतीति । संपर्कार्धवर्गादवनतिवर्गं विशोध्य शिष्टस्य मूलं षष्ट्या निहत्य गत्यन्तरेण हरेत् । तत्र लब्धाः स्थित्यर्धघटिका भवन्ति ॥ ३१ ॥

+अथ स्पर्शमोक्षकालयोर्लम्बनानयनमाह—

**षष्ठ्याऽऽहत्यास्तरे(न्त)रेणाऽऽप्ता स्थित्यर्धघटिका स्फुटा ।**
**अविशेषतिथिस्ताभिर्विहीना सहिता तदा ॥ ३२ ॥**

अविशेषतिथिरिति । ताभिः स्थित्यर्धनाडिकाभिर्हीना अविशेषतिथिर्लम्बनसंस्कृतपर्वान्तकालो मोक्षकालः स्पर्शतिथिः स्पर्शकालो भवति । तथा स्थित्यर्धनाडिकाभिर्युताऽविशेषतिथिर्लम्बनसंस्कृतपर्वान्तकालो भवति । ताभ्यां

---

*लघ्वार्य. सूर्य. १३–४, ब्राह्म. चंद्र. ८–१०, श्रीपति. चंद्र. १२, ग्रहग. चंद्र. १२,
+श्रीपति. सूर्य. ११–२, ग्रहग. सूर्य. १५,

स्पर्शमोक्षकालाभ्यां पूर्ववन्मध्यलग्नादीनानीय स्पर्शलम्बनमोक्षलम्बनं चाविशेषान्तमानयेत् । तदिह स्पर्शलम्बनं मोक्षलम्बनं चेत्युच्यते ॥ ३२ ॥

स्फुटस्थित्यर्धानयनमाह—

ग्रासादिमोक्षकालौ स्तस्ताभ्यां जीवाविधिस्तदा ।
ग्रासमध्यविनिष्पन्नलम्बनान्तरनाडिकाः ॥ ३३ ॥
स्थित्यर्धे प्रक्षिपेन्नित्यं ग्रहणे तिग्मदीधितेः ।
मध्यान्तलम्बनस्थित्या वर्धते मोक्षसंभवः ॥ ३४ ॥

ग्रासमध्येति । स्पर्शकालनिष्पन्नलम्बनस्य मध्यकालनिष्पन्नलम्बनस्य च यदन्तरं तत्स्थित्यर्धे सदा प्रक्षिपेत् । तत्स्फुटं स्पर्शस्थित्यर्धं भवति । तथा मोक्षकालनिष्पन्नलम्बनमध्यकालनिष्पन्नलम्बनयोश्चान्तं स्थित्यर्धे प्रक्षिपेत् । तत्स्फुटमोक्षसिध्यं(स्थित्यर्धं, भवति । उत्क्षिप्य भुजमुच्यते इति । एवमानीतं स्थित्यर्धमेव स्फुटं भवति । अत्र [न]संदेह इत्यर्थः ॥ ३३ ॥ ३४ ॥

यदा मध्यकालात्स्पर्शकालो मोक्षकालो वाऽन्यकपाले भवति तत्र विशेषमाह—

स्थित्यर्धमित्यतिस्पष्टमुत्क्षिप्य भुजमुच्यते ।
स्पर्शमोक्षौ यदाऽन्यस्मिन् कपाले ग्रहमध्यतः ॥ ३५ ॥
स्पर्शनं लम्बनं देयं सर्वस्थित्यर्धनाडिषु ।
मोक्षेऽप्येवं सदाऽऽयातं स्थित्यर्धे दीयते सदा ॥ ३६ ॥

स्पर्शमोक्षाविति । यदा मध्यकालात्स्पर्शकालोऽन्यकपाले भवति । पूर्वाह्ण एकः पराह्ण अन्य इत्यर्थः । तदा स्पर्शलम्बनं सर्वं स्थित्यर्धे प्रक्षेप्यं भवति । तथा मध्यकपालादन्यकपाले मोक्षकपालो यदा भवति तदा मोक्षलम्बनं सर्वं स्थित्यर्धे प्रक्षेप्यम् ॥ ३५ ॥ ३६ ॥

यदा पुनर्मध्याह्ने मध्यकालो भवति तदा स्पर्शलम्बनं मोक्षलम्बनं च समस्तं स्थित्यर्धे प्रक्षेप्यमित्याह—

दिनार्धे ग्रहमध्ये च कल्प्यतेऽयं विधिः क्रमात् ।
ग्राह्यग्राहकबिम्बार्धविश्लेषक्षेपवर्गयोः ॥ ३७ ॥

दिनार्धे ग्रास(ग्रह)मध्ये चेति । विमर्दार्धानयनमाह—ग्राह्यग्राहकेति । ग्राह्यग्राहकबिम्बार्धं ग्राह्यबिम्बार्धं विशोध्य शेषवर्गाद्विक्षेपवर्गं विशोध्य शिष्टस्य

मूलं विमर्दार्धलिप्ता भवन्ति । ताः षष्ट्या निहत्य गत्यन्तरेण विभज्य लब्धं विमर्दार्धघटिका भवन्ति ॥ ३७ ॥

सूर्यबिम्बेऽष्टमभागच्छादनस्यादृश्यत्वात्तद्भागच्छादनकालस्पर्शद्युगते क्षेप्य इत्याह—

**विक्षेपस्य पदाद्देयं विमर्दार्धस्य नाडिकाः ।**
**तीक्ष्णांशुबिम्बवस्वंशलिप्तिकाकालसंयुतः ॥ ३८ ॥**

कीर्णां( तीक्ष्णां)शुबिम्बेति । मोक्षद्युगतेः स कालः शोध्यः ॥ ३८ ॥

*अथाक्षवलनमाह—

**स्पर्शकालो भवेत्तस्य भासुरत्वाद्विवस्वतः ।**
**मध्यतिथ्यन्तरासूनामुत्क्रमज्याक्षसंगुणा ॥ ३९ ॥**
**विष्कम्भार्धेन हर्तव्या लब्धकाष्ठस्य दिग्विधिः ।**
**व्यासार्धादधिकासूनां क्रमज्यात्रिज्यया युताम् ॥ ४० ॥**

मध्यतिथीति । अत्र मध्यमिति दिनार्धमुच्यते । तिथिस्पर्शद्युगतं मध्यद्युगतं मोक्षद्युगतं च दिनार्धस्पर्शद्युगतयोरन्तरालासूनामुत्क्रमज्यामानीयाक्षज्यया निहत्य व्यासार्धेन विभज्य लब्धं स्पर्शार्धज्याः साधनभूतत्रिराशिलिप्ताभ्योऽधिकाश्चेत्तत्राधिकासूनां क्रमज्यामानीय त्रिज्यया योजयेत् । तद्वलनसाधनज्या भवति । एवं वलनकाला आनीय तासां दिशं च कल्पयेत् । तत्र मध्यवलनस्य स्पर्शवद्विधिः स्पर्शभागोक्तलक्षणेन याम्यसौम्यदिशौ कल्पयेदित्यर्थः॥ ३९॥ ४०॥

तत्र दिग्विधिमाह—

**कृत्वैवमेव दिक्कल्प्या मध्ये प्रागासवाद्दिशोः ।**
**उदग्दक्षिणतः प्राह्णे बिम्बप्राक्पश्चिमार्धयोः ॥ ४१ ॥**

उदग्दक्षिणत इति । मध्याह्नात्प्राग्बिम्बस्य पूर्वार्धे उदग्वलनं भवति । बिम्बस्य पश्चिमार्धे दक्षिणवलनं भवति । मध्याह्नात्प्राग्बिम्बस्य पूर्वार्धे दक्षिणवलनं पश्चिमार्धे उदग्वलनमित्यर्थः । सूर्यस्य स्पर्शवलनं मध्यवलनं च पश्चिमार्धविहितं भवति । मोक्षवलनं पूर्वार्धविहितं भवति । चन्द्रस्य सर्वं प्र(त्य)त्ययेन भवति ॥ ४१ ॥

+अयनवलनमाह—

---

*सिद्धांतशेखरे. चंद्र. १८, लघुभास्करीये. चंद्र. १६, लघ्यार्यभटीये. चंद्रग्रहण. १६, सूर्य. चंद्र. २४, ब्राह्म. चंद्र.१६, +ग्रहगणिते. चंद्र. २१, लघुमानसे. ग्रहणा. १७, सिद्धांतशेखरे. चंद्र. २०, सूर्य. चंद्र. २४–५, लल्ल. चंद्रग्रहणा. ६२–५, ब्राह्म. चंद्र. १७, लघ्यार्यभटीये चंद्र. १७–८, लघुभास्करीये. चंद्र. १७,

नभसः पश्चिमे व्यस्तमक्षस्य वलनं सदा ।
त्रिराशिसहितेन्द्वर्कविपरीतगुणापमः ॥ ४२ ॥

त्रिराशिसंस्थितस्ये(सहितेन्द्वर्के)ति । त्रिराशिसहितस्यार्कस्ये न्दोर्वा भुजाया उत्क्रमज्यां परमापमेन निहत्य त्रिज्यया विभजेत् । तत्र लब्धमयनवलनं भवति। अत्राऽऽनयनच(व)लनयुतावर्केन्दू ग्राह्यौ । तस्य दिग्विभागमाह—अयनादिति॥४२॥

ताभ्यां संपर्कार्धमण्डले *स्फुटवलनानयनमाह—

लम्बाद्या दिक् तु पूर्वार्धो बिम्बस्यैवापरेऽन्यथा ।
नानाशयोस्तयोर्विद्धि विश्लेषधनुषोस्तयोः ॥ ४३ ॥

नानाशयोरिति । तयोरक्षापमवलनयोश्चापीकृतयोर्भिन्नदिशोरन्तरं कृत्वा तुल्यदिक्त्वे योगं कृत्वा जीवामानयेत्। तां जीवां संपर्कार्धेन निहत्य व्यासार्धेन विभजेत् । तत्र लब्धं संपर्कार्द्यमण्डले वलनं भवति । तद्वलनस्य नतेश्च तुल्य-दिक्त्वे योगं कुर्यात् । भिन्नदिक्त्वेऽन्तरं कुर्यात् । स्फुटवलनं भवति । वलन-विष...चन्द्रग्रहणे विक्षेपस्य दिग्व्यत्ययेन कल्प्यः । तद्वक्ष्यति च मध्यवलनस्य नतिसंस्कारो न क्रियते ॥ ४३ ॥

अथ लेखनप्रकारमाह—

संयोगोऽन्यत्र तज्जीवा(वाऽऽ)मन्व(न्त्रा)कार्धहता हृता ।
अन्तिकाङ्गुलतद्भागसमस्निग्धोरुमूर्तिना ॥ ४४ ॥
ग्राह्याऽङ्गुलार्धमानेन कर्कटेनाऽऽलिखेत्क्षितौ ।
ग्राह्यग्राहकबिम्बार्धसमवक्त्रेण चापरम् ॥ ४५ ॥
पूर्वाव(प)रे ततः कुर्यान्मीनेनोत्तरदक्षिणे ।
दक्षिणोत्तरतः केन्द्रान्नीत्वा वलनमप्यतः ॥ ४६ ॥
उत्पाद्य तत्र मत्स्या(ध्या)न्तं युक्त्या सूत्रं नयेद्बुधः।
बाह्यमण्डलतत्सूत्रसंपाते बिन्दुनिश्चयः ॥ ४७ ॥
बिन्दुतः केन्द्रसंप्रापि सूत्रं तस्मात्प्रसाध्यते ।
तस्य ग्रा(बा)ह्यपरिधेश्च संपातो यत्र लक्ष्यते ॥ ४८ ॥
तत्र तीक्ष्णांशुबिम्बस्य प्रदेशः स्पर्शमोक्षयोः ।
मौर्वीकाऽर्धाङ्गुला ज्ञेया यथा वा लक्ष्यते दिवि ॥ ४९ ॥

मुखाविन्यस्तेति । कर्कटलक्षणं ग्राहकबिम्बार्धमानेन कर्कटेन ग्राह्यबिम्बमा-लिख्य तन्मध्यमेव मध्यं कृत्वा ग्राह्यग्राहकबिम्बयोगार्धसमवक्त्रेण कर्कटेनापरं

*ब्राह्म. चंद्र. १८, लघुभास्करीये. चंद्र. १८–९, लघ्वार्य चंद्र. १७,

संपर्काख्यं वृत्तं चाऽऽलिख्य पूर्वापररेखां कृत्वा तद्वशादुत्पन्नमत्स्यानुसारिदाक्षिणोत्तररेखां च कुर्यात् । पुनः केन्द्रात्स्पर्शवलनं मोक्षवलनं च दक्षिणोत्तरसूत्रे यथादिशं नीत्वा तत्र बिन्दुं कृत्वा तद्बिम्बमध्ये पूर्वापरं मत्स्यमुत्पाद्य तद्वशाद्बाह्यवृत्तान्तं सूत्रं युक्त्या नयेत् । स्पर्शवलनाबिन्दुतः स्पर्शादिशि मोक्षवलनबिन्दुतो मोक्षदिशमित्यर्थः । तत्र स्पर्शसूत्रबाह्यपरिधिसंपाते स्पर्शबिन्दुं कुर्यान्मोक्षसूत्रबाह्यपरिधिसंपाते मोक्षबिन्दुं च कुर्यात् । पुनः स्पर्शबिन्दुतः केन्द्रमापि सूत्रं कुर्यात् । तत्सूत्रस्य ग्राह्यबिम्बपरिधेश्च योगो यत्र दृश्यते तीक्ष्णांशुबिम्बस्य तत्प्रदेशे स्पर्शो भवति । तथा मोक्षबिन्दुतः केन्द्रमापि सूत्रं नयेत् । तत्सूत्रग्राह्यपरिधियोगे मोक्षो भवति ।

तत्र बिम्बवलनादिलिप्तानामङ्गुलमानमाह—

मौरि(र्वी)केति—

मौरि(र्वी)का लिप्ता सा अर्धाङ्गुलप्रमाणा भवति । यथा वा लक्ष्यते दिवीति । अनेन हरिजसंस्थे ग्रहे लिप्ता, एकाङ्गुलप्रमाणा भवतीत्युक्तं भवति । नत्यसंयुक्तविशिष्टमित्यनेन मध्यलग्नस्य...नतिसंस्कारो न भवतीत्युक्तं भवति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

अथ मध्यग्रहणपरिलेखनाय तद्वलनाद्यानयनप्रकारमाह—

**नत्या संयुक्तविश्लिष्टं *वलनं ग्रहमध्यजम् ।**
**तन्नत्योस्तुल्यकाष्ठत्वे वलनं पूर्वतो नयेत् ॥ ५० ॥**
**भिन्नाशयोस्तयोः केन्द्रात्पश्चिमेन प्रसार्यते ।**
**तन्नत्यनुदिशं सूत्रं ततो मत्स्येन नीयते ॥ ५१ ॥**
**बाह्यमण्डलतः केन्द्रमानी(न)येत्तद्विचक्षणः ।**
**केन्द्रात्तदनुसारेण नतिसूत्रं प्रसार्यते ॥ ५२ ॥**
**मध्यबिन्दुस्तदग्रे स्याद्बिन्दुतत्स्पर्शमोक्षयोः ।**
**दक्षिणस्यां नतौ भागे याम्ये सौम्ये विपर्ययात् ॥ ५३ ॥**

तन्नत्योरित्यादिना । तन्मध्यपालनमध्यनत्योस्तुल्यदिक्त्वे मध्यवलनं केन्द्रात्पूर्वतो नयेत् । भिन्नदिक्त्वे केन्द्रात्पश्चिमे नयेत् । वलनाग्रे मत्स्यमुत्पाद्य तदनुसारेण मध्यनतिदिशि बा...सूत्रं नयेत् । तत्सूत्रबाह्यपरिधिसंपातात्केन्द्रमापि सूत्रं नीत्वा तत्सूत्रे केन्द्रान्मध्यनतितुल्य...वृत्तान्तं तदग्रे बिन्दुं कुर्यात् । स मध्यबिन्दुर्भवति ।

*सिद्धांतशेखरे. चंद्र. ३७, ग्रहगणिते. चंद्र. २६–२९,

स्पर्शमोक्षयोर्बिन्दू तौ पूर्वोक्तावित्यर्थः । एतत्स्पर्शमध्यमोक्षाख्यं बिन्दुत्रयं विशेषाज्ज्ञेयमित्यर्थः । दक्षिणस्यां नतौ याम्ये नतिसूत्रेयमावपर्यये उत्तरस्यां नतौ केन्द्रात्सौम्ये भागे नतिसूत्रं नेयम् । अत्र न्यायतः ग्रासस्य वचनं चन्द्रग्रहणे वैपरीत्यसंभवात् ॥ ५० ॥ ५१ ॥ ५२॥५३॥

तद्वैपरीत्यं प्रदर्शयति—

**विधिर्ग्रहणमध्यस्य भानोरिन्दोर्विपर्ययात् ।**
**आलिखेत्तद्ग्रहे व्यक्तं ग्रासमध्यान्तसंभवम् ॥ ५४ ॥**

विधिर्ग्रहणमध्यस्य भानोरिन्दोर्विपर्ययादिति । अत्रोक्तो ग्रहणमध्यस्य विधिर्भानोर्भवति । इन्दोस्तु तद्विपर्ययाज्ज्ञेयः । मध्यवलनस्य नयनप्रकारं विक्षेपस्य नयनप्रकारं च चन्द्रस्याधोकुविपर्ययाद् भवतीत्यर्थः । तद्ग्रहे चन्द्रग्रहणेऽपि ग्रासमध्यान्तसंभवैर्बिन्दुभिर्बिन्दुवशाद् । ग्रासप्रमाणमालिखेदित्यर्थः॥५४॥

ग्रहणमध्यमेवमालिखेदित्याह—

**मध्ये बिन्दुशिरोन्यस्तग्राहकार्धवपुर्धृता ।**
**खण्डयेत्कर्कटेनाऽऽशु निर्दिष्टस्फुटमानतः ॥ ५५ ॥**
**ग्राह्यस्य खण्डितायाव...च्छेद्यतेऽथ यत् ।**
**ग्रहमध्ये तथा सर्वा विस्पष्टमुपलक्ष्यते ॥ ५६ ॥**

मध्यबिन्दुशिरोन्यस्तेति । आश्विति रेखायाः स्पष्टतासिद्ध्यर्थम् । निर्दिष्टस्फुटमानत इति । छेद्यते निर्दिष्टेन स्पष्टमानेन परिलेखनविधौ दृष्टेन ग्राहकबिम्बप्रमाणेन ग्राह्यबिम्बस्य यावत्प्रमाणं खण्डितं भवति । अथ यावद्बिम्बलिखितं भवति ग्रहणमध्यकाले तथा व्योम्नि ग्राह्यबिम्बं दृश्यते । लिखितशब्देन समस्तच्छादनमुच्यते । अथवा विक्षेपाभावे ग्राह्यस्य महत्त्वाद्वलयाकारं ग्राह्यबिम्बं दृश्यते तल्लिखितमित्युच्यते ॥ ५५ ॥ ५६ ॥

ग्राहकमार्गपरिलेखनप्रकारमाह—

**न्यस्तबिन्दुत्रयप्राप्तिं(पि) मीनाभ्यां वृत्तमालिखेत् ।**
**ग्राहकस्य भवेत्पन्थास्तत्रेष्टग्रासकल्पना ॥ ५७ ॥**

न्यस्तबिन्द्विति । स्पर्शबिन्दुमध्यबिन्दुमोक्षबिन्दुत्रयप्रापि वृत्तखण्डं *मत्स्यद्वयवशादालिखेत् । संपर्कवृत्तान्तर्गतं वृत्तभागमालिखेदित्यर्थः । स ग्राहकस्य पन्था मार्गो भवति । तस्मिन्वर्त्मनि ग्राहकमध्यं प्रकल्प्य इष्टग्रासपरिलेखनं कर्तव्यम् ॥ ५७ ॥

तत्प्रकारमाह—

*श्रीपति. त्रिप्रश्न. ५, लल्ल. त्रिप्रश्न. ३,

इष्टहीनेन युक्तेन स्थित्यर्धेन हतां हरेत् ।
सूर्येन्द्वोर्भुक्तिविश्लेषं षष्ट्या लब्धस्य वर्गितम् ॥ ५८ ॥
प्रक्षिप्यावनतेर्वर्गे यन्मूलं रविसोमयोः ।
इष्टग्रासशलाका स्याच्छे(ग्रः शे)षो ग्रास इष्टजः ॥ ५९ ॥

इष्टकालविहि(ही)नेनेति । मध्यकालात्प्रागतीतत्काल इष्टकालः । तत्परत एष्यकाल इष्टकालः । इष्टकालं स्थित्यर्धाद्विशोध्य शिष्टनाडिकां गत्यन्तरकलाभिर्निहत्य षष्ट्या विभजेत् । तत्र लब्धं वर्गीकृत्य इष्टकालावनतिवर्गे प्रक्षिप्य मूली कुर्यात् । तत्र लब्धं रविसोमयोर्ग्रहण इष्टग्रासशलाका भवति । इष्टग्रासशलाकाया लिप्ता भवन्तीत्यर्थः । ता लिप्ताः संपर्कार्द्विशोध्य शिष्टमिष्टग्रासो भवति ॥ ५८ ॥ ५९ ॥

*इष्टग्रासपरिलेखनमाह–

सुश्लक्ष्णा वैणविंशत्कात्केन्द्रात्तिर्यक् प्रसार्यते ।
तस्याग्रेण तथा पन्थाः प्रोच्यते ग्राहकस्य च ॥ ६० ॥
यत्र ग्राहकमानेन खण्डयेद्ग्राह्यबिम्बकम् ।
तावदेव तथाग्रस्तं दृश्यते ग्राह्यमण्डले ॥ ६१ ॥

सुश्लक्ष्णा वैणेति । इष्टग्रासशलाकातुल्यामेकां वेणुशलाकां केन्द्रात्स्पर्शदिशि मोक्षदिशि वा तिर्यङ्निदध्यात् । तदग्रवर्त्मरेखा स एव योगे बिन्दुं कृत्वा तत्र मध्यं कृत्वा ग्राहकबिम्बमालिखेत् । तदा तद्वृत्तान्तर्गतो यो ग्राह्यस्य भागः स भागश्छन्नो भवति । तत्र शेषभागस्य रूपं यथा दृश्यते तथा रविरपि दृश्यते । भागस्य वक्रत्वसंभवाद्यथावक्रमित्युक्तिः ॥ ६० ॥ ६१ ॥

निमीलनोन्मीलनकालयोरिष्टग्रासपरिलेखनमाह–

विमर्दार्धकलाहीनं यत्स्थित्यर्धं कलाभितः ।
तत्कालच्छेद्यकं तेन भास्वत्खण्डादि खण्डयेत् ॥ ६२ ॥
प्रदेशसूत्रं बिम्बस्य कर्कटेनावगाह्यते ।
पश्चार्धे गृह्यते व्यक्तं पूर्वे चासौ प्रमुच्यते ॥ ६३ ॥

विमर्दार्धकलाहीनामिति । विमर्दार्धघटिका गत्यन्तरलिप्ताभिर्निहत्य षष्ट्या

*श्रीपति. चंद्र. २५–३४ लघुभास्करीये. चंद्रग्र. २४, सूर्य. छेद्यका. २–१२ लल्ल. चंद्र ग्र. २०–४ गोला. चंद्र. २६–३०

विभजेत् । तत्र लब्धा विमर्दार्धकला इत्युच्यन्ते । स्थित्यर्धशब्देन तन्मूलभूताः संपर्कार्धकला उच्यन्ते । ताभ्यः संपर्कार्धकलाभ्यो मूलीकरणलब्धा विमर्दार्धकलाः शोधयेत् । तत्र शिष्टं तत्कालच्छेद्यसाधनं भवति । तत्समान[श]लाकां स्पर्शबिन्दुतो मोक्षबिन्दुतश्च ग्राहकवर्त्मन्यपि पृथङ्निधाय तद्वर्त्मसङ्गद्वयबिन्दुद्वयं कृत्वा तद्बिन्दुद्वयं मध्यं कृत्वा ग्राहकमानेन कलामात्रभूतो भास्वतो बिम्बं खण्डयेत् । तदोन्मीलनं निमीलनं च प्रदृश्यते । तत्र स्पर्शभागलिखितग्राहकेण यो भागो ग्राह्यबिम्बस्य खण्डितस्तत्र स्पर्शावसानम् । तदुक्तम्—"पश्चाच्च गृह्यते" इति । मोक्षभागलिखितग्राहकेण यो भागः खण्डितस्तत्र मोक्षारम्भः । तदुक्तं—'पूर्वे चासौ प्रमुच्यते' इति । स्पर्शावसानं निमीलनं मोक्षारम्भ उन्मीलनम् । अथवा पश्चाद्गृह्यते, पश्चाद्भागे स्पर्शारम्भः । पूर्वे प्रमुच्यते पूर्वभागे मोक्षावसानमित्युक्तं भवति । एवं चन्द्रग्रहणेऽपि मध्यजीवालम्बनादिकं कार्यम् ॥ ६२ ॥ ६३ ॥

तत्र यो विशेषः स उच्यत इत्याह—

एवमाशामुखादर्शसकलोरुकलाभृतः ।
कान्तावदनसंवृत्तो वपुषः शशलक्ष्मणः ॥ ६४ ॥

एवमाशामुखेत्यादिना ॥ ६४ ॥

तत्र विशेषमाह—

अविकार्यो विधिर्ज्यानां विशेषो यः स कथ्यते ।
भूच्छायाया गुणाः कल्प्या रवेः कक्ष्यासमुद्भवाः ॥ ६५ ॥
भागहारः शशाङ्कस्य कर्ण एव प्रकीर्तितः ।
शशिवल्लम्बनाल्लब्धं व्यत्ययात्क्षेपशोधने ॥ ६६ ॥

भूच्छायाया इति । तत्र भूच्छायाया मध्यज्यादिकं रविकक्ष्यासमुद्भवं ग्राह्यम् । विक्षेपं विना मध्यज्या कार्या । तथोदयज्या चेत्यर्थः । लिप्तानयने भागहारस्तु चन्द्रकर्ण एव । लम्बनस्य क्षेपशोधने व्यत्ययात्कार्ये । एवं चन्द्रग्रहणेऽपि लम्बनविधिरिहोक्त एतदयुक्तमेवेति गोलविद आहुः ॥ ६५ ॥ ६६ ॥

शास्त्रान्तरेषु न दृष्टं च भूच्छायाया * दैर्घ्यानयनमाह—

ताडितो योजनः कर्णो धालि(त्री)व्यासेन भास्वतः ।
तयोर्व्यासविशेषेण भूच्छायादैर्घ्यमाप्यते ॥ ६७ ॥

*आर्य. गोल. ४०, ब्राह्म. माना. ९, लघभास्करीये. चंद्र. ७, लल. चंद्र. ६–७ सूर्य. चंद्र. ४–५, ग्रह. चंद्र. ६,

ताडितो योजन इति । रवेः स्फुटयोजनकर्णो भूव्यासेन गुणितो भूव्या-सरविव्यासयोरन्तरेण भक्तो भूछायाया दैर्घ्यमानं योजनात्मकं भवति ॥६७॥

प्रकारान्तरेण च तदाह—

*पञ्चाऽऽहतो रवेः कर्णः षोडशापहृतः फलम् ।
भूच्छायादैर्घ्यमाख्यातमिन्दुकर्णस्ततः क्षयः ॥ ६८ ॥
भूव्यासगुणिते शेषे छायादैर्घ्यहृते फलम् ।
विष्कम्भार्धहतं भक्तं चन्द्रकर्णेन तत्ततः ॥ ६९ ॥

पञ्चाऽऽहत इति । रवेः स्फुटयोजनकर्णे पञ्च( ५ )गुणिते षोडशभि-( १६ )र्भक्ते भूछायाया दैर्घ्यं भवति । 'इन्दुकर्णस्ततः क्षयः' इति । भूछायाया दैर्घ्याच्चन्द्रस्य स्फुटयोजनकर्णं विशोध्य शेषव्यासेन निहत्य छाया-दैर्घ्येण विभज्य लब्धं त्रिज्यया निहत्य चन्द्रस्य स्फुटयोजनकर्णेन विभजेत् । तत्र लब्धं लिप्तात्मकं तमसो बिम्बं भवति ॥ ६८ ॥ ६९ ॥

अन्ये लम्बनं विना शशिनो ग्रहणं वदन्तीत्याह—

अन्ये भवन्ति शशिनो ग्रहणोपदेशं
हीनं गुणैर्दशभिरन्यफलान्तरत्वात् ।
स्थित्यर्धकालमचलं विदधीत तस्मि-
न्नाद्यन्तयोर्ग्रहणमध्यसमुत्थितं यत् ॥७०॥

अन्य इति । तत्र स्थित्यर्धकालमविशिष्टं ग्राह्यमित्याह—स्थित्यर्ध-कालमचलमिति । मध्यत...विक्षेपस्थित्यर्धकालेन सिद्धं स्थित्यर्धमाद्यन्तयोः स्पर्शमोक्षयोरचलमव( वि )शिष्टं कुर्यात् ॥ ७० ॥

तत्कर्माऽऽह—

×क्षुण्णा स्थित्यर्धकालेन भुक्तिः षष्ट्या समाहृता ।
समलिप्ते क्षयस्पर्शे मोक्षे क्षेपो निगद्यते ॥ ७१ ॥
विक्षेपस्तस्य तस्माच्च स्थित्यर्धं च प्रसाध्यते ।
एवं कर्मविशेषोऽयं त्रिमर्दार्धस्य वा पुनः ॥ ७२ ॥

क्षुण्णा स्थित्यर्धेति । स्थित्यर्धकालेन नाडिकात्मकेन चन्द्रस्य स्फुटभुक्तिं

*लल्ल. चंद्र. ६ ×गोला. चंद्र. १२, लल्ल. चंद्र. १५–६, ब्राह्म. चंद्र. ९, ग्रह, च १४, सूर्य. चंद्र. १४–५, लघुभास्करीये. चंद्र. ११, श्रीपति. चंद्र. १२,

निहृत्य षष्ट्या विभज्य लब्धं समलिप्तेन्दावृणं कुर्यात् । स स्पर्शेन्दुः । पुनस्तमेव लब्धं समलिप्तेन्दौ धनं कुर्यात् । स मोक्षेन्दुः । ताभ्यां पुनर्विक्षेपमानीय वर्गीकृत्य संपर्कार्धवर्गाद्विशोध्य शिष्टस्य मूलात्षष्टिघ्नाद्गत्यन्तरेण स्पर्शस्थित्यर्धं चाऽऽनयेत् । पुनस्ताभ्यां पूर्ववद्गतिफलमानीय सप्त ७ लिप्तेन्दावृणं धनं च कृत्वा विक्षेपद्वयमानीय ताभ्यां स्थित्यर्धद्वयमानयेत् । एवं पुनः पुनः कृत्वाऽविशेषयेत् । अव( वि )शिष्टस्थित्यर्धद्वयं स्फुटं भवति । विमर्दार्धेऽप्येवमविशेषकर्म कार्यम् । परिलेखनकर्मणि चन्द्रस्य ग्रहणे विक्षेपस्य दिग्व्यत्ययेन कल्प्या, इति ॥ ७१ ॥ ७२ ॥

पूर्वोक्तमपि स्पष्टीकर्तुं पुनश्चाऽऽह—

**विक्षेपः शशिनः कल्प्यश्छेद्यकाले सतां वरैः ।**
**उत्तरो दक्षिणे नित्यं दक्षिणश्चोत्तरे तथा ॥ ७३ ॥**

विक्षेपः शशिन इति ॥ ७३ ॥

**प्रोक्तमेतदवधूय मत्सरं**
**सूर्यचन्द्रतमसां क्रमागतम् ।**
**कर्म येन विदुषा समर्पितं**
**दैवविद्भवति सर्वतन्त्रवित् ॥ ७४ ॥**

**इति महाभास्करीये पञ्चमोऽध्यायः ॥ ५ ॥**

---

उक्तं ग्रहणकर्म स्तूयते प्रोक्तमेतदित्यादिना ॥ ७४ ॥

इति परमेश्वरकृतायां कर्मदीपिकायां पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ स्वस्वविक्षेपेण ग्रहाणां दर्शनसंस्कारद्वयमाह—

***स्वेष्टदेशपलजीवया हतां**
**क्षितिमिष्टशशिजां हरेत्पुनः ।**
**लम्बकेन यदवाप्तमुत्तरे**
**शोधयेदुदयगे निशाकरे ॥ १ ॥**
**अस्तगे धनमुशन्ति तारवे-**
**दक्षिणे विधिरयं विपर्ययः ।**
**वर्जितं त्रिभुवनस्य शीतगो-**
**रुत्क्रमापमविसंहतिं हरेत् ॥ २ ॥**

---

*श्रीपति. ग्रहोदया. ७, लल्ल. ग्रहोद. ३, सूर्य. ग्रहयु. ८, सिद्धा. ग्रहोद. १ गोला. दृक्कर्म. ५, लघुभास्करीये. अ. ६ श्लो. १, लघुमानसे दृक्कर्म १-२,

व्यासवर्गनिचयेन शोधये-
चन्द्रतोऽयनविमण्डलाशयोः ।
तुल्ययोर्घनमुशन्ति तद्विदो
व्यत्ययेन शशिनि तत्फलं सदा ॥ ३ ॥

स्वेष्टदेशेति । इष्टकालानीतचन्द्रस्य विक्षेपकलां स्वदेशपलज्यया निहत्य लम्बकेन हरेत् । तत्रावाप्तं लिप्तादिकं फलमुत्तरविक्षेपे चन्द्रे उदयग उदयविषयं गते शोधयेत् । अस्तगेऽस्तविषयं गते क्षिपेत् । दक्षिणविक्षेपेऽयं विधिर्व्यत्ययेन कार्यः । दक्षिणविक्षेप उदये धनमस्तमये ऋणमित्यर्थः । एतदाक्षं कर्म । *अथाऽऽयनं कर्माऽऽह—वर्जित त्रिभवनस्येति । चन्द्रस्फुटे राशित्रयं विशोध्य विशिष्टभुजाया उत्क्रमज्यामानीय तस्या विक्षेपस्य...परमापक्रमस्य च संहतिं तेषां त्रयाणां परस्परं वधं व्यासवर्गनिचयेन त्रिज्यावर्गेण विभजेत् । तत्र लब्धं लिप्तादिकं विक्षेपायनयोस्तुल्यदिशोः पूर्वफलसंस्कृते चन्द्रे शोधयेत् । विक्षेपायनदिशोर्भिन्नयोः क्षिपेत् । एवं सदा । अस्योदयास्तमयवशान्न भेद इत्यर्थः । अत्र मण्डलशब्देन विक्षेपदिगुच्यते । चन्द्रोऽत्र सायनो ग्राह्यः । अयनदिगिह सायनस्य ग्राह्या । न राशित्रयहीनस्य॥ १ ॥ २ ॥ ३ ॥

दृश्यचन्द्र इति कथ्यते बुधै-
रेवमालिखितचारसंचयः ।
भास्करेन्दुविवरांशकोद्भवः
प्राणराशिघटिकाद्वयैः शशी ॥ ४ ॥
दृश्यतेऽमलनिरभ्रतारके
भास्करेऽस्तगिरिमूर्धगेऽम्बरे ।
चन्द्रभानुविवरोत्क्रमज्यया
चन्द्रबिम्बमभिहत्य भाजयेत् ॥ ५ ॥
षण्णवाष्टरससंख्यया सितं
नित्यमेव गणकः प्रजायते ।
चन्द्रभानुविवरं वदाधिकं
स्यात्तदा क्रमगुणेन युक्तया ॥ ६ ॥

*लघुभास्करीये. अ. ६ श्लो. ४, सूर्य. ग्रहोद. १०, लल्ल. ग्रहोद. २, ब्राह्म. ग्रहोद. ३, लघुमानसे. दृक्कर्म. १–२, गोला. दृक्कर्म. ५, श्रीपति. ग्रहोद. ७,

ल(त्रि)ज्यया सितविधिर्विधीयते
पूर्वमानवर(श)तोऽसितं तथा।
सूर्यचन्द्रविवरांशजीवया
चोत्क्रमक्रमवशात्सितं विदुः॥ ७॥

दृश्य चन्द्र इति। एवं दृक्कर्मद्वययुतश्चन्द्रो दृश्य इत्युच्यते। दृक्समो भवति। स्वोदयकाले स्वास्तमयकाले च तल्लग्नसमो भवतीत्यर्थः। चन्द्रस्य मौढ्यनिवृत्तिकालमाह—भास्करेन्दुविवरेति। सूर्यास्तमयकाले तत्कालसूर्यदृक्कर्मद्वययुततत्कालचन्द्रयोरन्तरालगताः प्राणा घटिकाद्वयतुल्याश्चेत्तदानीं चन्द्रो दृश्यो भवति। सूर्योदयेऽप्येवं घटिकाद्वयान्तरितश्चेद् दृश्यः। अस्तमये षड्राशियुतयोः सूर्येन्द्वोरन्तरालघटिकाः स्वोदयैर्ग्राह्याः। *चन्द्रस्य सितमानाद्यानयनमाह-चन्द्रभानुविवरेति। चन्द्रादर्कं विशोध्य शिष्टं राशित्रयादूर्ध्वं न चेत्तद्भुजाया उत्क्रमज्यामानयेत्। द्वितीयपदगतं तत्र शेषं चेत्कोटया, उत्क्रमज्यामानीय तां त्रिज्यया योजयेत्। एवमुक्तजीवातः सितमानयेत्। यदि शेषं षड्राश्यधिकं भवति तदा षड्राशीनपास्य शेषादुक्तवज्जीवामानयेत्। तज्जीवातो सितमानं साध्यम्। यथोक्तया चन्द्रमभिहत्य षण्नगाष्टरसैर्विभजेत्। तत्र लब्धं सितमानं भवति। षड्राश्यधिकं चेत्तथाऽऽनीतं कृष्णमानं भवति। उत्क्रमक्रमवशात्सितं विदुरिति। सूर्यचन्द्रविवरांशजीवयोत्क्रमक्रमवशात्सिद्धया यथा सितपक्षे सितं विदुस्तथाऽसितपक्षेऽसितं विदुरिति योज्यम्॥४॥ ५॥ ६॥॥ ७॥

चन्द्रस्यापमाद्यानयनमाह—

चन्द्रमा वद(मोपम)विकाष्ठयोर्युति-
स्तुल्यगोलभवयोरतोऽन्यथा।
काष्ठयोर्विप(व)रजापरो गुण-
स्तेन चन्द्रचरनाडिकाविधिः॥ ८॥

चन्द्रमोपमविकाष्ठयोर्युतिरिति। चन्द्रस्यापमचापं विकाष्ठाख्यं विक्षेपचापं चाऽऽनीय तयोस्तुल्यदिशोर्योगं कृत्वा भिन्नदिशोरन्तरं कृत्वा जातस्य जीवामानयेत्। सा चन्द्रस्यापमजीवा भवति। तेनापमेन चन्द्रस्य स्वाहोरात्राक्षीतिज्याचरज्याः पूर्ववत्साध्याः। पूर्वोक्तस्य वचनं विस्पष्टार्थमिति कल्प्यम्॥ ८॥

*लघु. शृंगो. १२, ब्राह्म. शृंगो. १२–३, लघुभास्करीये. अ. ६ श्लो. ६–७,

शृङ्गोन्नतिपरिलेखनाय शङ्क्वाद्यानयनमाह—

भानुचन्द्रविवरासुभिः सदा
शङ्कुरुक्तविधिना विधीयते ।
अक्षचापगुणसंगुणं हरे-
ल्लम्बकेन शशिकीलकं स्फुटम् ॥ ९ ॥
कीलकाग्रगुणमाप्यते ततो
नित्यदक्षिणगतोऽस्तसूत्रतः ।
गोलखण्डगुणितो विभज्यते
लम्बकेन शशिनोऽपमाः स्फुटाः ॥ १० ॥
दक्षिणोत्तरदिशोर्निशाकृतो-
र्लभ्यतेऽग्रगुणसंज्ञितः सदा ।
तुल्यकाष्ठगतयोस्तयोर्युतिः
शुद्धिमन्यभवयोस्तयोर्विदुः ॥ ११ ॥
भास्कराग्रगुणकेन तस्य तु
व्यत्ययेन युतिशोधने कृते ।
बाहुकः शशभृतः स्फुटो मतः
कोटिरत्र शशिशङ्कुरिष्यते ॥ १२ ॥

भानुचन्द्रविवरासुभिरिति । शुक्लपक्षेऽष्टम्याः प्राक्सूर्यास्तमये चन्द्रार्कौ स्फुटीकृत्य चन्द्रस्य शङ्कुसाधनान्यानीय पुनश्चन्द्रस्य दृक्कर्मद्वयं कृत्वा सूर्येन्द्वोरन्तरासून्गन्तव्यासून्प्रकल्प्य चन्द्रशङ्कुमानयेत् । पुनश्चन्द्रशङ्कुमक्षज्यया निहत्य लम्बकेन विभजेत् । तत्र लब्धं चन्द्रस्य शङ्क्वग्रं भवति । नित्यदक्षिणं च तदस्तोदयसूत्रतः पुनश्चन्द्रस्य स्फुटापमं व्यासार्धेन निहत्य लम्बकेन हरेत् । तत्र *लब्धमिन्द्वग्रं भवति । शङ्क्वग्रेन्द्वग्रयोस्तुल्यदिशोर्योगं कुर्यात् । भिन्नदिशोरन्तरं कुर्यात् । तच्छायाभुजो भवति । पुनः सूर्यस्यार्काग्रामानीय सूर्याग्रच्छायाभुजयोस्तुल्यदिशोरन्तरं कुर्यात् । भिन्नदिशोस्तयोर्योगं कुर्यात् । तत्र लब्धं चन्द्रस्य बाहुका भवति । तत्रान्तरितसूर्याग्राया आ-

*लघुभास्करीये. अ. ६ श्लो. ९–१० सूर्य. स्पष्टा. २८ लल्ल. उदया. २; श्रीपति, चंद्र. ७ ब्राह्म. चंद्रशृं. ५ ग्रहग. ग्रहच्छा. ३

धिक्ये तद्विपरीता चन्द्रबाहुकार्या दिग्भवति । सूर्याग्राया न्यूनत्वे सूर्याग्रावच्च-न्द्रबाहुदिग्भवति । योगे तु सूर्याग्राव्यत्ययेन चन्द्रबाहोर्दिग्भवति । कोटिरिह चन्द्रशङ्कुर्भवति ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥

*शृङ्गोन्नतिपरिलेखनप्रकारमाह—

सूर्याग्राम्योत्तरे बाहुः कोटिः पूर्वपरा यतः ।
बाहुकोटिशिरःप्रापि सूत्रं कर्णः प्रकीर्तितः ॥ १३ ॥
कर्णकोट्यग्रसंपाते शशिबिम्बं समालिखेत् ।
कर्णसूत्रानुसारेण बिम्बान्तः सितबिन्दुकम् ॥ १४ ॥
तद्बिन्दुत्रयशीर्षस्पृग्वृत्तमालिख्यते सदा ।
तत्र शीतांशुबिम्बस्य विवरः शौक्ल्यमुच्यते ॥ १५ ॥
शृङ्गोन्नतिनती साम्ये मानादिष्टा यथा तथा ।
तत्सर्वं व्योम्नि शीतांशोर्विस्पष्टमुपलभ्यते ॥ १६ ॥

सूर्याग्राम्योत्तर इति । समायामवनौ कुत्रचिदुदकं बिन्दुं प्रकल्प्य ततो दक्षिणत उत्तरतो वा बाहुदिशि बाहुसूत्रं दक्षिणोत्तरायतं प्रसार्य तदग्रतश्चन्द्र-शङ्कुमितं कोटिसूत्रं पूर्वदिशि प्रसार्य पुनः सूर्यबिन्दुतः कोटिशिरःप्रापि कर्णसूत्रं प्रसारयेत् । एवं बाहुकोट्योरग्रप्रापि कर्णसूत्रं भवति । पुनः कर्ण-कोट्यग्रसंपातं केन्द्रं कृत्वा चन्द्रबिम्बमालिखेत् । तदन्तर्गतं कर्णं तु चन्द्रस्य बाह्यपरिध्यन्तं नयेत् । तत्कर्णसूत्रं चन्द्रबिम्बस्य पूर्वापरसूत्रं भवति । तद्वशा-द्दक्षिणोत्तरसूत्रं च कुर्यात् । दक्षिणोत्तरसूत्राग्रद्वये बिन्दुद्वयं कुर्यात् । पुनः कर्णसूत्रबिम्बापरपरिधियोगात् सितमानं कर्णसूत्रानुसारेण बिम्बान्तः कर्णसूत्रे नीत्वा तत्र सितबिन्दुं कुर्यात् । तत्र दक्षिणोत्तरसूत्राग्रगं यद्बिन्दुद्वयं सितबिन्दुश्च यस्तत्त्रितयस्पृग्वृत्तमत्स्यद्वयनिर्गतसूत्रयोर्योगत आलिखेत् । तद्वृत्तस्य बहिर्गतो यश्चन्द्रबिम्बभागः स चन्द्रस्य सितभागो भवति । तत्र शृङ्गस्योन्नतिनती साम्यं वा यथा मानादिष्टच्छेद्यकेऽङ्गुलादिमानेन सिद्धं भवति तथा तदुन्नत्यादि सर्वं व्योम्नि चन्द्रबिम्बस्य दृश्यते । एवमादित्यस्यास्तमयकाले विधिर्ज्ञेयः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

इष्टकाले त्वस्तलग्नतः शङ्क्वादितत्कालेन्दोः साध्यमित्याह—

*लघुभास्करीये. अ. ६–१६, लघुमानसे. संकीर्णा, ९ गोला. शृंगो. ८–९, सूर्य. चंद्र.शृं. १३–४, लल्ल. चंद्रशृंगो. १६–७, श्रीपति. चंद्रा. २४–५, ब्राह्म. शृंगो. २, ३, ६,

अस्तारूढे रवावेतदिष्टकालेऽस्तलग्नतः ।
तत्कालेन्दोस्तु दृग्ज्यादिकर्म सर्वं प्रकीर्तितम् ॥ १७ ॥

अस्तारूढे रवाविति । इष्टकाले तु तत्कालेन्दुं तत्कालोदयलग्नं चाऽऽनीय चन्द्रे षड्राशीन्प्रक्षिप्योदयलग्नचन्द्रयोरन्तरालासून्गन्तव्यासून्प्रकल्प्य तैश्च केवलचन्द्रस्य स्वाहोरात्रादिभिश्च शङ्कुः साध्यः । इन्द्वग्रं च केवलचन्द्रा-त्साध्यम् । अयनचलनं सर्वत्र क्षेप्यम् । लग्नाग्रं तु उदयलग्नात्षड्राशियुतात्सा-ध्यम् । षड्राशियुतमुदयलग्नमर्कं प्रकल्प्य प्राग्वत्सर्वं कार्यमित्यर्थः ॥ १७ ॥

एवमष्टम्याः पूर्वं विधिः । अष्टम्याः परतश्चेदुदयलग्नमर्कं प्रकल्प्य सर्वं कार्यमित्याह—

अष्टम्याः परतः कल्प्यो लग्नमेव दिवाकरः ।
शङ्क्वादिको विधिस्तेन धनमानविवर्जितः ॥ १८ ॥

अष्टम्याः परत इति । पूर्वपक्षे प्राक्कपालगते चन्द्रे उदयलग्नमर्कं प्रकल्प्य चन्द्रोदयलग्नयोरन्तरालासुभिश्चन्द्रस्य स्वाहोरात्रादिभिश्च चन्द्रशङ्कुः साध्यः । उदयलग्नादर्काग्रा साध्या । लग्नाग्रमत्रार्काग्रा इत्यर्थः । सितमानं तु साक्षा-दर्कादेव साध्यम् । तत्र सितमानहीनचन्द्रबिम्बं कृष्णमानं भवति । अत्र भुजाग्रात्कोटिरपराभिमुखं नीयते । कर्णसूत्रबिम्बपरिधियोगात्कृष्णमानमन्तं नीयते । अन्यत्सर्वं पूर्ववत् । कदाचिदेतन्न घटते ॥ १८ ॥

चन्द्रशङ्क्वानयने गतगन्तव्यप्राणा एव साध्या इत्याह—

अर्केन्दुविवरप्राणैरुदयस्थे रवेः परैः ।
शङ्कुर्न्नतिवशात्कार्यो नावशिष्टे यथेष्टजम् ॥ १९ ॥

अर्केन्दुविवरप्राणैरिति उदयास्तमयकालयोरर्केन्द्वोर्विवरप्राणैश्चन्द्रशङ्कुः साध्यः । अन्यत्रेष्टकाले चन्द्रोदयलग्नयोरस्तलग्नचन्द्रयोर्वा यथासंभवमन्तराला-सुभिः साध्यः । तत्रान्तरालासवः सकृदानीता एव ग्राह्याः । न त्वविशिष्टाः । तत्रापराह्णेऽस्तलग्ने चन्द्रे च षड्राशीन्प्रक्षिप्य विवरासवः साध्याः । तथाऽर्के चास्तलग्नशब्देन तत्कालेऽस्तमितो राशिरुच्यते । तस्योदयप्रमाणतुल्यत्वात्षड्रा-शयः प्रक्षिप्यन्त इति ज्ञेयम् ॥ १९ ॥

पौर्णमास्यन्तमेवं चन्द्रस्य कर्म भवतीत्याह—

एवमास्तमयिकैस्तैर्भास्करेन्दू तमोमयैः ।
यावत्पञ्चदशी तावत्कर्मेदं शशिनः स्मृतम् ॥ २० ॥

एवमास्तमयिकैरिति । पूर्वपक्ष आस्तमयिकैरिष्टकालजैर्वा भास्करेन्दुतमोभिरुक्तं चन्द्रमसः कर्म भवतीत्युक्तं भवति । विक्षेपार्थमत्र राहुर्गृह्यते ॥ २० ॥

+पौर्णमास्यां चन्द्रस्योदयकालमाह–

रविचन्द्रान्तरं नाड्यो दिनमानेन वर्जिताः ।
प्राक्पश्चाद्दृश्यते सोमस्तावतीभिरिनेऽस्तगे ॥ २१ ॥
पक्षासान्तरि[न्तात्पर]तः सोमो हरिजादुपरि स्थितः ।
इष्टकालविलम्बोऽल्पैः प्रमाणैः परिलिख्यते ॥ २२ ॥
कोटिः पूर्वगता कार्या भुजा याम्योत्तरायता ।
अग्रे कोटिशिरःस्पृक्कं कर्णसूत्रं प्रसार्यते ॥ २३ ॥
पूर्वतः कर्णसूत्रेण सितमानं प्रवेशयेत् ।
अन्वितं वा पराद्भागं शीतांशोः परिलेखने ॥ २४ ॥

रविचन्द्रान्तरा नाड्य इति । अस्तमये तत्कालसूर्यतत्कालचन्द्रयोरन्तरालासवो दिनप्रमाणेभ्यो हीना यद्व...विशिष्टा भवन्ति तदा तत्प्रमाणं दिनप्रमाणयोरन्तरतुल्यकाले सूर्यास्तमयात्प्रागेव चन्द्रस्योदयः स्यात् । दिनप्रमाणादधिके सूर्येन्दुविवरकाले तदन्तरतुल्यकालेन सूर्यास्तमयात्पश्चाच्चन्द्रस्योदयकालः स्यात् । अपरपक्षे चन्द्रपरिलेखनमेवं कार्यमित्याह–पक्षान्तात्परत इति । अपरपक्षे हरिजादुपरि स्थिते तत्काललग्नमर्कं प्रकल्प्य चन्द्रलग्नान्तरालासुभिश्चन्द्रशङ्कुः साध्यः। लग्नाग्रमेवार्काग्रां प्रकल्पयेत् । तत्र कोटिः पूर्वतो नीयते । भुजा तु पूर्ववद्याम्योत्तरायता । कर्णसूत्रं च पूर्ववद्भुजाग्रात्कोट्यग्रमपि नेयम् । बिम्बस्य पूर्वभागात्सितमानमन्तः कर्णानुसारेण नेयम् । बिम्बापरभागादसितं वा नेयम् । अन्यत्सर्वं पूर्ववत् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

अर्कोदयकाले वा एतत्कार्यमित्याह–

अथवाऽर्कोदये कार्यं तत्कालेन्द्वर्कसंभवैः ।
सितासितस्य पूर्वोक्तं दृश्यकालोऽभिधार्य[धीय]ते ॥ २५ ॥

अथवाऽर्कोदय इति ॥ २५ ॥

+ब्राह्म. उदया. ९. लल्ल. उदया. १. सूर्य. उदया. ३. श्रीपति. ग्रहोद. ९ ग्रह. उदया. ४.

अथ दृश्यकालोऽभिधास्यते । तत्प्रकारमाह—

षड्राशियुक्तसूर्येन्द्वोरपरादोदयासवः ।
अविशिष्टाः सिते पक्षे दृश्यकालोऽस्य तं वरम् ॥ २६ ॥
चक्रार्धयुततीक्ष्णांशोश्चन्द्राच्च करणागतात् ।
अविशेषान्तरप्राणैर्निशीथे दृश्यते शशी ॥ २७ ॥

षड्राशियुक्तेति । पूर्वपक्षे षड्राशियुतयोः सूर्येन्द्वोरकास्तमयासिद्धयोरन्तरालासवः साध्याः पुनस्तैरसुभिः सिद्धां स्वां स्वां गतिं सूर्यास्तमयकालजयोस्तयोः सूर्येन्द्वोः प्रक्षिप्यान्तरालासवः साध्याः । पुनस्तत्सिद्धां गतिमपि तयोरस्तमयकालजयोरि( रे )व प्रक्षिप्यान्तरालासवः साध्याः । एवमविशिष्टासुभिर्निशि चन्द्रोऽस्तं गच्छति । कृष्णे पक्षे तु षड्राशियुतसूर्यकेवलचन्द्रयोरन्तरालासवः साध्याः । तैरविशिष्टैर्निशि चन्द्र उदयं गच्छति ॥२६॥२७॥

अत्र प्रकारान्तरमाह—

अस्तकालविलग्नेन्द्वोरन्तराप्राणजन्मना ।
कालेन लग्नशीतांशू कृत्वा भूयोऽन्तरासवः ॥ २८ ॥
पूर्वकाले न ते योज्याश्चन्द्रे लग्नाधिके रवौ ।
विश्लेषा वाऽन्यथा यावत्तुल्यकालोदये नवः ॥ २९ ॥
इत्थं कर्मक्रमावाप्तकालेनामृततेजसः ।
रश्मिभिः पूरयन्नाशा निशीथे दृश्यते शशी ॥ ३० ॥

अस्तकालविलग्नेन्द्वोरिति । सूर्यास्तमयकाले उदयलग्नं चन्द्रं चाऽऽनीय तयोरन्तरप्राणानेकत्र स्थापयेत् । पुनस्तैरन्तरप्रमा(प्रा)णैस्तत्कालचन्द्रस्तत्काललग्नं चाऽऽनीय तयोरप्यन्तरालासवः साध्याः । ते पूर्वासुषु प्रक्षेप्याः । अत्र चन्द्रादुदयलग्नमधिकं चेत्पूर्वानीतासुषु शोध्या इति चेहोक्तं तन्न संभवति । पुनरपि लग्नचन्द्रयोरन्तरप्राणाः साध्याः । ते च पूर्वासुषु प्रक्षेप्याः । एवमविशिष्टैरसुभिर्निशि चन्द्र उदयं याति ॥ २८ ॥ २९ ॥ ३० ॥

अविशेषे प्रकारान्तरमाह——

अस्ताद्रिमस्तकारूढतिग्मांशुगतभागतः ।
देशभेदोदयप्राणा ग्राह्या यावन्निशाकृतः ॥ ३१ ॥

तेष्वहर्मानशुद्धेषु रात्रौ व्युष्टेषु चन्द्रमाः ।
दृश्यते परिशुद्धेषु तस्मात्तानविशेषयेत् ॥ ३२ ॥

अस्ताद्रिमस्तकेति । सूर्यास्तमयकाले सूर्यं चन्द्रं चाऽऽनीय तयोः सूर्येन्द्वोरन्तरालासवः साध्याः । पुनस्तेभ्यो दिनप्रमाणं विशोध्य शेषकालोत्थगतिं सूर्येन्द्वोः प्रक्षिप्यान्तरालासूनानीय दिनमानं विशोध्य शेषगतिं चास्तमयकाल......जसूर्येन्द्वोः प्रक्षिप्यान्तरालासवः साध्याः । एवमविशिष्टैरसुभिर्दिनप्रमाणदिनैर्निशि चन्द्र उदयं याति । तेष्वसुषु व्युष्टेषु गतेष्वित्यर्थः ॥३१॥ ॥ ३२ ॥

तत्राविशेषे प्रकारमाह—

तद्घटीभोगसंयुक्तः सूर्येन्द्वन्तरघटीक्रमात् ।
ततोऽहर्मानसंशुद्धिः शेषभोगादिकर्मणा ॥ ३३ ॥
अर्केन्दुमध्यनाडीभ्यो दिनमानं विवर्धते ।
तद्विशेषघटीशेषदिवा चन्द्रोदयः स्मृतः ॥ ३४ ॥
तन्नाडिकानुपातात्तभोगहीनार्कचन्द्रयोः ।
अन्तरालोदयप्राणैः कल्प्यं तत्राविशेषणम् ॥ ३५ ॥

तद्घटीभोगेति ॥ ३३ ॥ ३४ ॥ ४५ ॥

कृष्णपक्षे विशेषमाह—

चन्द्रादौदयिकात्प्राणाद्यावानौदयिको रविः ।
ग्राह्यास्ततोऽपि विश्लेषात्कल्प्यते निश्चलक्रिया ॥ ३६ ॥
कृतावशेषनाडीभिर्यावन्नोदेति भास्करः ।
तावदाशामुखादर्शः प्राणैराक्रमते शशी ॥ ३७ ॥

चन्द्रादौदयिकात्प्राणा इति । उदयकालजाच्चन्द्रादुयकालसूर्यान्तमसवो ग्राह्याः । पुनस्तात्सिद्धांशस्य गतिं तयोर्विशोध्यान्तरासवः साध्याः । एवमविशिष्टैरसुभिरर्कोदयात्प्राक्चन्द्र उदयं याति । आक्रमते शशी उदयं यातीत्यर्थः ॥ ३६ ॥ ३७ ॥

अथ चन्द्रस्य मध्यलग्ने साम्यानयनमाह—

आसन्नौ स्वधिया ह्यत्र मध्यलग्ननिशाकरौ ।
कालेन्दुमध्यलग्नानामविशेषं समाचरेत् ॥ ३८ ॥

आसन्नो स्वधियेति । मध्यलग्नचन्द्रयोः साम्यकालं स्वधिया कल्पयेत् । एतदुक्तं भवति । त्रिराशिसहितचन्द्रेण समं लग्नं यदा भवति तदा द्युगतनाडीरानयेदिति । पुनस्तेन द्युगतेन तत्कालार्केण च मध्यलग्नमानयेत् । तत्काले चन्द्रं चाऽऽनयेत् । पुनर्द्युगतकालचन्द्रमध्यलग्नानामविशेषं कुर्यात् ॥ ३८ ॥

तत्प्रकारमाह––

नाड्योऽन्तरालजैः(जाः) साध्या लङ्काराश्युदयैस्तयोः ।
ऊनविश्लेष्यनाडीभ्यः शुद्धिक्षेपोऽधिके स्मृतः ॥ ३९ ॥

नाड्योऽन्तरालजाः साध्या इति । ऊहासिद्धद्युगतसाधितमध्यलग्नचन्द्रयोरन्तरालासवो लङ्कोदयासुभिः साध्याः । मध्यलग्नादूने चन्द्रे तेऽन्तरालासवो द्युगताच्छेध्याः (च्छोध्याः) । अधिके प्रक्षेप्याः । पुनस्तेन द्युगतेन मध्यलग्नमिन्दुं चाऽऽनीय तयोरन्तरालासूंस्तस्मिन्द्युगत ऋणं धनं वा कृत्वा तेन च मध्यलग्नमिन्दुं चाऽऽनयेत् यावन्मध्यलग्नसमश्चन्द्रस्तावदेवं कुर्यात् ॥ ३९ ॥

मध्यलग्नसमेन चन्द्रेण मध्यच्छाया साध्यत इत्याह–

मध्यलग्नसमश्चन्द्रो जायतेऽनेन कर्मणा ।
तत्क्षिप्त्यपक्रमाक्षैस्तु मध्यच्छाया प्रसाध्यते ॥ ४० ॥

मध्यलग्नसमश्चन्द्र इति । मध्यलग्नसमचन्द्रस्य विक्षेपापक्रमाभ्यामक्षेण च पूर्ववन्मध्यच्छाया प्रसाध्यते । तेषां त्रयाणां चापयोगस्य तदन्तरस्य वा जीवा मध्यच्छाया भवतीत्यर्थः ॥ ४० ॥

चन्द्रस्योदये च शृङ्गोन्नतिकल्पनामाह––

अर्धोदितस्य चन्द्रस्य तथाऽर्धास्तमितस्य च ।
इन्दूदयास्तलग्नाग्रे शृङ्गस्योन्नतिकल्पना ॥ ४१ ॥

अर्धोदितस्येति । इन्दोरुदयलग्नाग्रवशादस्तलग्नाग्रवशाच्च शृङ्गोन्नतिरिन्दुस्थाद्यस्मिन् भागे तत्कालरविस्तद्भागे शृङ्गोन्नतिर्भवतीत्यर्थः । तत्परिज्ञानं तु सूर्यस्य रात्रिशङ्कुमानीय तच्छङ्क्वग्रमुत्तराभिमुखमानीयार्काग्रायां संस्कृत्य तद्वशादिन्द्वग्रवशाच्च भवति। उक्तमिदं शशिनो विशेषकर्म । तस्य सूर्यस्योक्तं समशङ्क्वादिकर्म शशिनश्च कुर्यात् ॥ ४१ ॥

अमुं दाताधितहकेमिदं दृक्कमादिक ग्रहाणां कुजादीनामपि विधीयत इत्याह—

कर्मेदं शशिनस्तस्य कुर्यादमृतदीधितेः।
ग्रहाणामपि सर्वेषामिदं कर्म विधीयते ॥ ४२ ॥

कर्मेदमिति ॥ ४२ ॥

तत्र ग्रहाणां विशेषमाह—

+अंशैरन्तरितः सूर्यान्नवभिर्दृश्यते भृगुः।
द्व्यधिकैर्द्व्यधिकैर्दृश्या ज्यौज्ञसौरि(जीवज्ञार्कि)धरासुताः॥४३॥

अंशैरन्तरित इति । भृगुः सूर्यान्नवभिः कालभागैरन्तरितो दृश्यः स्यात् । तैर्द्व्यधिकैरेकादशभिरीज्यो गुरुः । त्रयोदशभिर्बुधः । पञ्चदशभिर्मन्दः । सप्तदशभिः कुज इति ॥ ४३ ॥

शुक्रे विशेषमाह—

प्रपन्नवक्रः सद्वर्त्मा सितो दृश्योऽर्धपञ्चभैः।
चतुर्भिर्वाऽशुभालित्वादंशैरंशुमतोऽन्तरैः ॥ ४४ ॥

प्रपन्नवक्रेति । वक्रं प्राप्तः शुक्रः सार्धैश्चतुर्भिरेव वा दृश्यो भवति । सद्वर्त्मा बलान्तरय( यु )त इत्यर्थः ॥ ४४ ॥

उक्तैः कालभागैः कालानयनप्रकारमाह—

कालभागाः क्रमेणैते दिघ्नापि(द्विनिघ्ना)घटिकाः स्मृताः।
ऐन्द्रं तद्राशिजा ज्ञेया वारुण्यां सप्तमं स्मृतम् ॥ ४५ ॥

कालभागाः क्रमेणेति । ग्रहाणामुक्ताः कालभागा दशगुणिता विनाडिका भवन्ति । ग्रहसूर्ययोरन्तराले तावत्यो विनाडिकाः सन्ति चेद् ग्रहो दृश्यो भवति । ऊनाश्चेददृश्यः । ग्रहः पूर्वदिशि दृश्यते चेद् ग्रहस्य सूर्यस्थितराशिप्रमाणेन विनाडिकाः साध्याः । पश्चिमदिशि ग्रहो दृश्यते चेद् ग्रहस्य सूर्यस्य च सप्तराशिप्रमाणेन विनाडिकाः साध्याः ॥ ४५ ॥

तदानयनप्रकारमाह—

ग्रहसूर्यान्तरांशघ्नं त्रिंशता स्वोदयं हरेत्।
लब्धकालो निरुक्तेन यदा तुल्यस्तयो(दो)दयः ॥ ४६ ॥

ग्रहसूर्यान्तरांशघ्नमिति ॥४६॥

---

+ लघुभास्करीय. ७–१ आर्य. गोल. ४ लल्ल. उदया. ५ ब्राह्म. उदया. ६ सूर्य. उदया. ६–८ ग्रह. उद. ६,

कुजादीनां विक्षेपानयने ग्रहभूम्यन्तरालगतकर्णस्य हारकत्वात्तदानयनमाह—

मन्दोच्चकर्णगुणितं शीघ्रकर्णं विभाजयेत् ।
विष्कम्भार्धेन संलब्धो +भागहारः प्रकीर्तितः ॥४७॥
ग्रहयोरन्तरं भाज्यं प्रतिलोमानुलोमयोः ।
भुक्तियोगेन शेषाणां भुक्तविश्लेषसंख्यया ॥ ४८ ॥
दिनादिर्लभ्यते कालो योगिनां योगकारकः ।
भुक्तेरनेकरूपत्वात्स्थूलः कालोऽत्र गम्यते ॥ ४९ ॥
समलिप्तौ ततो युक्त्या कुर्यात्तन्त्रस्य वेदिता ।
स्वोपदेशाद्गुरोर्नित्यमभ्यासेनापि गम्यते ॥ ५० ॥

मन्दोच्चकर्ण इति । मन्दोच्चकर्णेन मन्दस्फुटसिद्धकर्णेन गुणितं शीघ्रकर्णं त्रिज्यया विभजेत् । तत्र लब्धो विक्षेपानयने हारो भवति । भूताराग्रहयो रेकस्मिन्वक्रगते च तयोर्भुक्तियोगेन तयोरन्तरकालौ विभजेत् । द्वयोर्वक्रगतयो-र्द्वयोः क्रमगतयोर्वा तयोरन्तरकालौ भुक्त्यन्तरेण हरेत् । तत्र लब्धं दिनादि-योगकालो भवति । अन्तरस्य बाहुल्ये प्रतिदिनं भुक्तेर्भिन्नरूपत्वात् । अत्रोक्तः कालः स्थूलो भवति । अतो युक्त्या ग्रहौ समलिप्तौ कुर्यात् । सा युक्तिस्तूपदे-शयुताद्गुरोः प्रतिदिनाभ्यासाद्वा ज्ञेया । योगकालसंभूतां गतिं प्रक्षिप्य संशोध्य वा समलिप्तौ ग्रहौ कुर्यात् ॥४७॥४८॥४९॥५०॥

×विक्षेपानयनमाह—

पातभागविहीनस्य समलिप्तस्य निश्चयात् ।
हत्वा सभास्वाविक्षेप(पात्र)भागहारेण भाजयेत् ॥५१॥
जीवभौमार्कपुत्राणामेवं विक्षेपकल्पना ।
शीघ्रोच्चाच्छेषयोश्चापि विक्षेपो दक्षिणोत्तरः ॥ ५२ ॥

पातभागविहीनस्येति । समलिप्तग्रहात्स्वपातभागान्विशोध्य तत्रोत्पन्नभुज-ज्यया स्वपरमाविक्षेपं निहत्य हारकेण हरेत् । तत्र लब्धं विक्षेपो भवति । जीवभौमार्कपुत्राणामेवं विक्षेपः साध्यः । शेषयोर्बुधशुक्रयोः स्वशीघ्रोच्चात्स्व-पातं विशोध्योक्तवद्विक्षेपः साध्यः । तुलादौ दक्षिणो विक्षेपः । अजादावु-त्तरः ॥ ५१ ॥ ५२ ॥

---

+लघुभास्करीये ७–८, गोला. गोलबन्धा. १५, ×ब्राह्म. स्फुटगत्यु. ३७, लल्ल. महापाता, ३, श्रीपति. चन्द्र. १०, ग्रह. चन्द्र. १०,

ग्रहयोर्दक्षिणोत्तरगतान्तरानयनमाह-

×भिन्नदिक्कौ तु विक्षेपौ शुक्रावन्तरमिष्टयोः ।
तुल्यदिक्कौ विशेषेण विश्वोद्धिवरलिप्तिकाः ॥ ५३ ॥

भिन्नदिक्काविति । भिन्नदिशुयोर्विक्षेपयोर्योगो ग्रहयोरन्तरं भवति । तुल्यदिशोस्तु विवरं ग्रहान्तरं भवति ॥ ५३ ॥

अन्तरलिप्ता अङ्गुलपादसमा अर्धाङ्गुलसमा वा इति प्रकल्प्य ग्रहयोरन्तरं वाच्यमित्याह-

पादाङ्गुलकलार्धार्धयया वा दृश्यते रविः ।
तदन्तरं तयोर्वाच्यं योगिनां योगकोविदैः ॥ ५४ ॥

पादाङ्गुलकलेति । हरिजासन्नेऽर्धाङ्गुलमन्यत्र पादाङ्गुलमित्यर्थः । अत्र कुजगुरुमन्दानां मन्दस्फुटात्स्वपातशोधनमिच्छन्ति केचित् । तदेव युक्तं स्यात् ॥ ५४ ॥

शुक्रादीनां व्यासलिप्तानयनमाह-

द्वात्रिंशत्पञ्चभिर्हत्वा भूयो भूयस्तदुत्तरः ।
शुक्रज्योक्(केज्य)ज्ञार्किभौमानां व्यासलिप्ताक्रमं विदुः ॥५५॥

द्वात्रिंशदिति । द्वात्रिंशत्संख्यां विन्यस्य तां पञ्चभिर्दशभिः पञ्चदशभिर्विंशत्या पञ्चोत्तरविंशत्या च क्रमाद्विभजेत् । तत्र लब्धाः शुक्रगुरुबुधमन्दभौमानां व्यासलिप्ता भवन्ति ॥ ५५ ॥

शुक्रादीनां लम्बनादिषु हारमाह—

एतैरपहृतः कर्णश्चन्द्रयोजनतः क्रमात् ।
लम्बनादिषु हारः स्यान्मानयोजनमाश्रितः ॥ ५६ ॥

एतैरेव ह(रपह)तं इति । एतैर्भृग्वादीनां हारयोजनात्मका इ(कैरि)त्यर्थः । यदि स्वस्वयोजनकर्णवशाद्भृग्वादीनां बिम्बलिप्ता आनीयन्ते तदा चन्द्रस्य योजनव्यास एव सर्वेषां योजनव्यासा भवन्ति ॥ ५६ ॥

योजनकर्णाख्यहाराणां बिम्बलिप्तानां च स्फुटीकरणमाह—

विष्कम्भार्धेन हर्तव्या भागहारहताः स्फुटाः ।
शेषं शीतांशुवत्कार्यो दश जीवा विनिश्चयः ॥ ५७ ॥

×लघुमानसे. ग्रहणा. २, लल्ल. महापाता. १-२, श्रीपति. पाता. ८-१०, ग्रह. पाता. ११-४, ब्राह्म. स्फुटगत्य. ३३-४, लघुभास्करीये .२-२७, लघ्वार्य. पाता,५-१०

चन्द्रोदयोपदेशो तु शङ्कुः स्यात्स्वचरादिभिः ।
स्वहारैर्ग्रहयोगेषु बन्धनावनतिर्विदुः ॥ ५८ ॥
ग्रहोपरागवच्छेषं स्थित्यर्धादिविधिक्रमः ।
इति प्रतिदिनाभ्यासविमलीकृतचेतसः ॥ ५९ ॥
गुरुप्रसादसंप्राप्तशास्त्रसद्भावचक्षुषाम् ।
नान्यथा जायते पार्थिवग्रहचारानुयायिनि ॥ ६० ॥
ईष्यानुरक्तकान्ताया[illegible]वृत्तिरिवामला ।

इति महाभास्करीये षष्ठोऽध्यायः ॥ ६ ॥

---

[illegible]भागेनेति । [illegible]भागहारा [illegible]ग्रहविवरस्येन । भागहारेण निहता[illegible]ज्यया [illegible]विभक्ताः स्फुटा भवन्ति । बिम्बाद्धिप्तास्तु त्रिज्याविभक्ता [illegible]ग्रहविवराख्यभागहारभक्ताः स्फुटा भवन्ति । मध्योदयलग्नयोर्विक्षेपानयनमाह—पातभागेनेति । मध्योदयलग्नयोः स्वपातं विशोध्य भुजज्यां स्वपरमविक्षेपेण निहत्य स्वभागहारेण विभज्य लब्धा मध्योदयलग्नयोर्विक्षेपलिप्ता भवन्ति । मध्यज्यादिकं चन्द्रवत्कुजादीनां च कार्यमित्याह—शेषं शीतांशुवदिति । मध्यज्या दृक्क्षेपज्या दृग्गतिज्या दृग्ज्या उदयज्या चेति +जीवापञ्चकं तत्पञ्चकं ग्राह्यग्राहकयोः पृथग्भवति । अतो दृशज्येत्युच्यते । चन्द्रवत्स्वचरादिभिः शङ्कुश्च कार्यः । ग्रहयोगे स्वहारेण लम्बनावनती च कार्ये । स्थित्यर्धादि च सूर्येन्दुग्रहयोरुपरागवत् कार्यम् इति प्रतिदिनाभ्यासेत्यादिश्लोकद्वयेन ग्रहकर्म स्तूयते ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

इति परमेश्वरकृतायां कर्मदीपिकायां
षष्ठोऽध्यायः ॥ ६ ॥

---

अथ युगभगणानाह—

शतमष्टोत्तरं भानोश्चतुर्भिर्युतैर्हतम् ४३२०००० ।
इन्दोः षट्त्र्यग्निरामेषुभूभृन्नगलिखा(शिली)मुखाः ५७७५३३३६ ॥ १ ॥
सागरं षडिषुषड्वेदशीतरश्मिसमाः शनेः १४६५६४ ।
वेदाश्विद्विचतुष्षट्करामसूरेरसृक्तनोः २२९६८२४ ॥ २ ॥

+ग्रहण. स्पष्टा. ४७, ब्राह्म. स्पष्टा. ५८, लल्लार्य. स्पष्टा. १७–२३, ब्राह्म. सूर्य. १, श्रीपति. सूर्य. १८,

कृतद्व्यष्टर्तुरन्ध्राद्वियमला२२९६८२४ भास्करस्य ये।
बुधभृग्वोस्तु शेषाणां शीघ्रोच्चभगणाः स्मृताः ॥ ३ ॥
इन्दूच्चस्य नवैकाश्विवस्वष्टकृत४८८२।९ संज्ञिताः।
बुधस्य खाश्विखाद्व्यग्निरन्ध्राचलनिशाकराः १७९३७०२०॥४५॥
भृगोर्वस्वष्टरामाश्विद्विखसप्तसमा गुणाः।
राहोः षड्द्विकनेत्राग्निविष्णुक्रमासिताः स्मृताः ॥ ५ ॥
अङ्गपुष्कररामाग्निरन्ध्रेष्विन्दुमिताधिकाः १५९३३३६।
द्वादशघ्नयुतं भानोर्मण्डिहारोऽधिकारयोः ॥ ६ ॥
अवमाख्योखवस्वाक्षिद्व्यष्टखेष्वश्विनो २५०८२२८०गुणाः।
खाष्टव्योमखखाश्राग्निखाष्टयो १६०३०००८० हार इष्यते ॥७॥
व्योमखाष्टाद्रिशीतांशुरन्ध्रद्व्यद्रिषु चन्द्रकाः १५७७९१७८००।
युगस्य +दिवसाः प्रोक्ता विक्षेपांशास्ततः परम् ॥८॥
बुध(धा)स्फुजिभ्रवि(द्वी)णां च द्वावेको वचसां पतेः।
सार्धांशः क्षितिपुत्रस्य पातभागाः क्रमेण च ॥ ९ ॥
विंशतिः खरसाश्चापि शतं खाष्टौ खसागराः।
उदगाशाद्विविक्षेपे पातहीनाद्विनिर्दिशेत् ॥ १० ॥
आशाश्विनः, खनवती, रसाविष्णुक्रमाश्विनः।
खाष्टेन्दवोऽष्टरुद्राश्च मन्दोच्चांशा यथाक्रमम् ॥ ११ ॥
भास्करस्य विजानीयादष्टसप्ततिरंशकाः ७८।
स्वमन्दोच्चं ग्रहाच्छोध्यं शीघ्राच्छोध्य(ध्या) ग्रहाःसदा॥ १२॥
सप्त चत्वारि रन्ध्राणि पर्वता मनवः क्रमात्।
एकत्रिंशन्नवशरा नव चाष्टित्रिकेषवः॥ १३ ॥
मन्दशीघ्रोच्चवृत्तानि विद्याविषमयोरपि।
समयोः पदयोश्चापि कथ्यन्ते मन्दशीघ्रयोः ॥ १४ ॥
शिलीमुखाश्विनोऽग्न्येकवसवोऽष्टिर्दशैव च।
नवाश्विनो नगशरा वसवस्तिथयः क्रमात् ॥ १५ ॥
एकपञ्चाशकं चैव सूर्यचन्द्रमसोरतः।
विष्णुक्रमः क्षितिधरा जीवा मरुयादयो मताः ॥ १६ ॥

+आर्यभटीये. दशगीति. १, खण्डखाद्य. तिथ्या. ३-५, लघु. मध्य.८, गोला. प्रश्ना. १ ३-४, ब्राह्म. अ. १०-५,

शतामिति । भानुभगणाः । इन्दोरिति । इन्दुभगणाः । सागरेति शनेः । वेदेति गुरोः । कृतेति कुजस्य । बुधभृग्वोर्भगणाः भास्करभगणा एव । कुजगुरुमन्दानां शीघ्रभगणाश्च त एव । इन्दूच्चस्येति । तदुच्चभगणाः । बुधस्येति । तच्छीघ्रोच्चभगणाः । भृगोरिति । तच्छीघ्रभगणाः । राहोरिति तद्भगणाः । विष्णुक्रमास्त्रयः । अङ्गपुष्करेत्यधिमासाः । द्वादशघ्ना इति । सौरमासा अपमान्योमेत्यवमदिनानि । खाष्टेति । चान्द्रदिनानि । व्योमर्द्रे( खे )ष्विति । भूदिनानि बुधशुक्रमन्दानां परमविक्षेपभागौ द्वौ । गुरोरेकः । कुजस्य सार्धोंऽशः । उक्तक्रमेण बुधादीनां पातभागा विंशत्यादयः । उदगंशादिविक्षेपाः । एतैर्भागैर्हीनाद्ग्रहादुक्तक्रमान्मन्दोच्चांशा आशाश्विन इत्यादयः । भास्करस्याष्टसप्ततिः स्वमन्दोच्चमिति । तत्पर्ययविधिः सप्तेत्यादयः । बुधादीनां पूर्वोक्तक्रमेण विषमपदयोर्मन्दे परिधय एकत्रिंशदादयः । तत्र शीघ्रपरिधयः शिलीमुखाश्विन इति । बुधशुक्रयोः क्रमात् समपदपरिधयः । अन्त्येक इति । मन्दस्य नवाश्विन इत्यादयः । तेषां युग्मपदयोर्विष्णुक्रम इति । सूर्यस्य विषमे युग्मे च परिधिः क्षितिधरा इति । तद्वच्चन्द्रस्याऽऽचार्येण गीतिकासूक्ता मन्दादयो जीवा ग्राह्याः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

÷मत्स्यादिजीवारहितं कर्माऽऽह—

मत्स्यादिरहितं कर्म वक्ष्यते तत्समासतः ।
चक्रार्धांशकसमूहाद्विशोध्या ये भुजांशकाः ॥ १७ ॥
तच्छेषगुणिताद्विष्टाशोध्यखाभ्रेषुखाब्धितः ।
चतुर्थांशेन शेषस्य वीषुमन्त्यफलं हतम् ॥ १८ ॥
बाहुकोट्योः फलं कृत्स्नं क्रमोत्क्रमगुणव्यवा ।
लभ्यते चन्द्रतीक्ष्णांश्वोस्ताराणां वाऽपि तत्त्वतः ॥ १९ ॥

मत्स्यादिकर्मरहितमिति । इष्टभुजाचापभाक् षड्राशिभागेभ्यो विशोध्य शिष्टेन भुजाचापभागान् निहत्य पृथक्संस्थाप्य तयोरेकं खाभ्रेषु खाब्धिभ्यो विशोध्य शिष्टाच्चतुर्भिर्भक्तं हारको भवति । पृथक् स्थितिगुण्यो भवति । तं गुण्यराशिं ग्रहस्यान्त्यफलेन निहत्य हारकेण हरेत् । तत्र लब्धं ग्रहस्य भुजा-

÷श्रीपति. स्फुटा. १७, ब्राह्म. स्फुटगत्यु. २३–४, ग्रहलाघवे. उपसंहारे. ४, लीलावत्यां. क्षेत्रव्यव. २१०, करणकुतूहले. त्रिप्रश्न. १२,

फलं भवति । अथवा गुण्यराशिं त्रिज्यया निहत्य हारेण हरेत् । तत्र लब्धं भुजज्या भवति । तथा परिधिस्फुटं कृत्वाऽन्त्यफलं ज्ञेयम् । उत्क्रम उत्क्रमभागान्... त्रिभागेभ्यो विशोध्य शेषेण जीवाफलमानीयान्त्यफलाद्विशोधयेत् । तदुत्क्रमफलं भवति । उत्क्रमज्या च तद्वत्साध्या ॥ १७ ॥ १८ ॥ १९ ॥

×आकाशकक्ष्यामाह—

इन्दोर्गणः खखवी(वि)यत्रसवृन्दनिघ्नो
व्योम्नो भवेयुरय(रिह) वृत्तसमानसंख्याः ।
इष्टग्रहस्य भगणैर्गगनस्य वृत्तं
भक्त्वाऽथ तस्य परिधिर्लभते समन्तात् ॥ २० ॥

इन्दोर्भगणा( दोर्गण ) इति । इन्दोर्भगणा दशगुणितचक्रकलाभिर्निघ्ना आकाशकक्ष्या भवन्ति । आकाशकक्ष्यामिष्टग्रहस्य भगणैर्हरेत् । तत्र लब्धमिष्टग्रहस्य कक्ष्या भवति ॥ २० ॥

एवमौदयिकं विधिमुक्त्वाऽर्धरात्रिकं तन्त्रान्तरमथोच्यत इत्याह—

निबन्धः कर्मणां प्रोक्तो योऽसावौदयिको विधिः ।
अर्धरात्रेस्त्वयं सर्वो यो विशेषः स कथ्यते ॥ २१ ॥

निबन्ध इति ॥ २१ ॥

तत्रौदयिकविधेर्यो विशेषस्तदाह—

त्रिशती भूदिने क्षेप्याऽप्यवमेभ्यो विशोध्यते ।
ज्ञगुर्वोर्भगणेभ्योऽपि विंशतिश्च ततोऽब्धयः ॥ २२ ॥

त्रिशती भूदिन इत्यादिश्लोकैः । भूदिने शतत्रयं क्षेप्यम् । अवमेभ्यः शतत्रयं विशोध्यम् । ज्ञगुर्वोर्भगणेभ्यो विंशतिश्चत्वारश्च विशोध्याः ॥ २२ ॥

÷अष्टिशतगुणो व्यासो योजनानां भुवो रवेः ।
खाष्टाब्ध्यङ्गानि ६४८० शीतांशोः शून्यवस्वब्धयस्तथा ४८० ॥ २३ ॥
बस्विन्द्रियगुणच्छिद्रवस्वङ्गानि विभावसोः ।
अङ्गाङ्केष्वेकभूतानि ५५९६ चन्द्रकर्णः प्रकीर्तितः ॥ २४ ॥
अष्टिरष्ट जिना रुद्रा विंशतिर्द्व्यधिकाः क्रमात् ।
दशाघ्ना गुरुशुक्रार्किभौमज्ञाधिस्वमन्दजाः ॥ २५ ॥

---

×श्रीपति. मध्यमा. ६०, आर्य. दशगी. ४, लल्ल. मध्य. १३, ब्राह्म. गोला. ११,
÷सूर्य. मध्य. ६०, श्रीपति. मध्य. १०१, लल्ल, चन्द्र. ३–४,

शतगुण इति । शतगुणा अष्टि १६०० भूव्यासः । खाष्टाब्ध्यङ्गानि ६४८० रविव्यासः । शून्यवस्वब्धयः ४८० शशिव्यासः । वस्वीन्द्रियगुणाच्छिद्रवस्वङ्गानि ६८९३५८ रवेर्योजनकर्णः । अङ्काङ्गेष्वेकभूतानि ५१५६६ चन्द्रकर्णः । दशघ्ना अष्टिभागा १६० गुरोर्मन्दोच्चांशाः । दशघ्ना अष्टौ ८० शुक्रस्य । दशघ्ना जिना २४० मन्दस्य । दशघ्ना रुद्रा ११० । [ भौमस्य ] दशघ्ना द्व्यधिका विंशतिर्बुधस्य २२० ॥ २३ ॥ २४ ॥ २५ ॥

उक्तानां मन्दवृत्तान्याह—

+मन्दवृत्तानि द्वात्रिंशन्मनवः षष्टिरेव च ।
खाद्रयो वसुदस्राः स्युः शीघ्रवृत्तान्यथाक्रमात् ॥२६॥
द्व्यद्रयः खाङ्गनेत्राणि खाब्धयोऽब्ध्याग्निदस्रकाः ।
द्व्यद्रीन्दवो रवेर्मन्दशुक्रवद्वृत्तमेव च ॥ २७ ॥
एकत्रिंशत्क्षपाभर्तुरर्धरात्रे विधीयते ।
तेषां भागाश्च विज्ञेयाः पण्डितैः परिकल्पिताः ॥ २८ ॥
मन्दशीघ्रोच्चयोः क्षेप्यं चक्रार्धं बुधशुक्रयोः ।
राशित्रयं तु शेषाणां पात्यते पातसिद्धये ॥ २९ ॥
कुजार्किदेवपूज्यानां भागौ द्वावेव कीर्तितौ ।
मन्दपाताच्च शीघ्रोच्चात्साधांशस्तु भृगुज्ञयोः ॥ ३० ॥
विबुधानां च सर्वेषां शीघ्रपाताः प्रकीर्तिताः ।
शोधयित्वा क्रमात्पातात् विक्षेपांशात्प्रसाधयेत् ॥ ३१ ॥
योगविश्लेषनिष्पत्तिरेकानेकस्वदिग्वशात् ।
विक्षेपः स स्फुटो ज्ञेयो ग्रहस्यैकस्य कीर्तितः ॥ ३२ ॥
अन्यस्याप्येवमेव स्याच्छेषाः प्रागुक्तकल्पनाः ।
एतत्सर्वं समासेन तन्त्रान्तरमुदाहृतम् ॥ ३३ ॥

त्रिंशन्मनवः षष्टिः । खाद्रयो वसुदस्रा इति । अथ शीघ्रवृत्तानि द्व्यद्रयः खाङ्गनेत्राणि खाब्धयः अन्यानि( योऽग्नि )दस्रकाः । द्व्यग्नी( द्री )न्दव इति । रवेरर्केन्द्वो[रु]च्चं । वृत्तं च शुक्रवत् । चन्द्रस्य वृत्तमेकत्रिंशत् । बुधशुक्रयोः पातार्धं चक्रार्थं( र्धं ) मन्दोच्चशीघ्रोच्चयोः क्षेप्यम् । तत्र बुधस्य मन्दोच्चे एव । शेषाणां चक्रपाद(त): शोध्यः । शुक्रार्किदेवपूज्यानां मन्दपातश्च

+ लल्ल. स्पष्टा. २८, आर्य. गीति. ८, सूर्य. स्पष्टा. ३४–५, ब्राह्म. स्पष्टा. ३४–९, श्रीपति. स्पष्टा. ३५–८, ग्रह. स्पष्टा. २२,

भागद्वयसंयुतः स्यात् । कुजज्ञयोर्मन्दपातः सार्धांशयुक्तः । बुधस्य शीघ्रपातो नास्ति । एवं पातद्वयमुक्तं तत्र पृथक्पृथक्पातं विशोध्य विक्षेपं साधयेत् । पुनस्तयोर्योगे वियोगे वा दिग्वशात्कृते स्फुटविक्षेपो भवति । तदुक्तं शोधयित्वा क्रमात्पातानीति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

स्फुटे विशेषमाह—

शीघ्रमन्दोच्चचापार्धं संस्कृतात्स्वीयमन्दतः ।
स्फुटमध्यग्रहाः सर्वे विश्लेषः परिकीर्तितः ॥ ३४ ॥

शीघ्रमन्दोच्चेति । तत्र शीघ्रफलार्धं मन्दोच्चे क्रियतुलाद्योर्ऋणधनं कृत्वा तत्रैव मन्दफलार्धं धनर्णं कुर्यात् । क्रियतुलाद्योरिति क्रमः । एवं फलद्वयसंस्कृतान्मन्दोच्चादेवास्तं सकलं मन्दन्यायेन मध्यमे कुर्यात् । स स्फुटमध्यमः । एतदिह सर्वेषां समानं स्यात् ॥ ३४ ॥

×आकाशकक्ष्यामाह—

वेदाश्विरामगुणितान्ययुताहतानि
चन्द्रस्य शून्यरहितान्यथ मण्डलानि ।
स्वैः स्वैर्हतानि भगणैः क्रमशो ग्रहाणां
कक्ष्या भवन्ति खलु योजनमानदृष्ट्या ॥ ३५ ॥

इति महाभास्करीये सप्तमोऽध्यायः ॥७॥

———

वेदाश्विरामगुणितानिति । ग्रहकक्ष्यामाह—स्वैः स्वैर्हतानीति । शून्यरहि(हि)ता ऐक...न्यस्थानवार्जितानि ॥ ३५ ॥

इति परमेश्वरकृतायां कर्मदीपिकायां सप्तमोऽध्यायः ॥७॥

———

अथ चन्द्रार्कौ विना तिथ्यानयनमाह—

शशिवत्सरताडिते गणेऽह्नां
युगभूवासरभाजिते तथा ।
अधिकाब्धगुणे तथैव विद्या-
दुभयोरन्तरमर्कवर्षपूर्वम् ॥ १ ॥

×श्रीपति. मध्यमा. ६०, आर्य. दश. ४, लल्ल. मध्य. १३, ब्राह्म. गोला. ११, सूर्य. अ. १२, श्लो. ८०–२, गोला. भुवन. ६७–९, ग्रह. कक्षाध्या. १–५,

रविवर्षगणेन नास्ति कृत्या
परिशेषितलब्धराशिनोऽथ मासौ ।
धृतिसंमितवासरान्दिनेभ्यः
परिशोध्यैव तदा भुजादिकार्यम् ॥ २ ॥
रविसंहृतमर्ककाललब्धं
विपरीतं तु धनर्णमिन्दुहेतु ।
शशिकेन्द्रजमप्यथाऽऽशु चैवं
शशिवत्तन्निशि वासरेषु कार्यम् ॥ ३ ॥
परिनिष्ठितनाडिकाऽप्यतीता
शशिनो यादिवसविहीनस्त्यषष्टिनिघ्नाः ।
स्फुटभागविशेषसूर्यभागैः
भंजितास्ताः स्फुटनाडिकास्तदाप्ताः ॥ ४ ॥

शशिवत्सरेति । शशिवत्सरेण द्युगणं निहत्य युगभूदिवसैर्विभजेत् । तत्र वर्षादिफलं भवति । तच्चान्द्रं च भवति । पुन(र)धिकाब्दगुणिताद्युगणाद्भूदिनैश्च वर्षादिफलं भवति । अधिकवर्षादिकं चान्द्रवर्षादिकाद्विशोध्य शिष्टं सौरवर्षादिकं भवति । तत्र वर्षान्विशोध्य शिष्टान्मासद्वयमष्टादश दिनानि च विशोधयेत् । राशिद्वयमष्टादश भागाश्चेत्यर्थः । शेषभुजायाः सूर्यभुजाफलमानीय तल्लिप्ताभ्यो द्वादशांशसमानघटिकां चान्द्राद्वर्षादिकात्त+द्भुजफलस्य धनत्वे विशोधयेत् । तस्य ऋणत्वे प्रक्षिपेत् । पुनरुपायविशेषेण चन्द्रकेन्द्रं विदित्वाऽस्मादासिद्धबाहुफलाद्द्वादशांशमपि तद्भुजावच्चान्द्रघटिकायाः कुर्यात् । तदा तस्मिन्दिवसाः शुक्र(क्ल)प्रतिपदाद्यास्तिथयो...... तत्र वर्तमानदिवसस्य या अतीता...कास्तष्ष...निहत्य सूर्येन्द्वोर्गत्यन्तरकलाभ्यो द्वादशांशेन विभज्य लब्धा स्फुटा नाडिका भवति । चान्द्रदिनाच्छशिकेन्द्रं स्वराङ्ककुहरैः खखाब्धिनिहतान्(त्)स्यात् ' शोध्या गोक्षी(क्षि)स्यङ्कक्ष्माभिर्भागयुते तथैकोंऽशः ' इत्यनेन शशिकेन्द्रं ज्ञेयम् ॥१॥२॥३॥४॥

स्फुटार्कान्मध्यमार्कानयनमाह—

---

+लल्ल. स्पष्टा. ३८, श्रीपति. स्फुटा. २८–४१, ब्राह्म. स्पष्टा. ४१–२, आर्य. काल, १२–५, ग्रह. स्पष्टा. ३७, सूर्य. स्पष्टा. ४७–४, लघ्वार्य. स्पष्ट. १५,

दिनमध्यच्छायार्कादुच्चविशुद्धभुजाफलं यत्स्यात् ।
तत्क्षयधनविपरीतादपि शेषविधेरवेर्मध्यम् ॥ ५ ॥

छायेति । मध्यदिनच्छायासिद्धो हि स्फुटः स्यात् । तस्मात् स्फुटार्का-च्छोध्य भुजाफलमानीय तद्भुजाफलमृणधनस्य स्फुटार्के कुर्यात् । ... भुजाफलमानीय प्रथमस्फुटार्के तद्वत्कुर्यात् । एवं विशेषविधिना सिद्धोऽर्को मध्यमार्को भवति ॥ ५ ॥

×चापीकरणमाह—

ज्यासंकलितात्क्रमशः शोधितजीवामाखिर्मखेः शेषम् ।
मध्याहतमन्त्याप्तं पूर्वयुतं भवति तच्चापम् ॥ ६ ॥

ज्यासंकलितादिति । ज्यासमूहाद्यन्तिमपिण्डज्यां विशोध्य तां विशोध्य तत्संख्यया मविं २२५ धनुर्भागं निहत्य एकत्र स्थाप्य पुनर्ज्याशेषं मख्या निहत्य वर्तमानखण्डज्यया विभज्य लब्धं पूर्वस्थापिते प्रक्षिपेत् । तदिष्टजीवाया धनुर्भवति । मखेः शेषमित्यनेन तत्साधर्म्यभूतजीवाशेषमेवोच्यते इति ॥

सार्धांशकोऽक्षाष्टकलाविहीन-
श्छायादिनार्धे समभूमिभागे ।
पञ्चाङ्गुलं द्वादशकस्य शङ्को-
राप्ता तस्मिन्दिनमध्ययातः ॥ ७ ॥

अष्टौ लवाः षोडशलिप्तिकोना
वल(लव)प्रवा( मा )णं प्रवदन्ति यस्मिन् ।
छायादिनार्धेऽर्धचतुर्थसंख्या
तत्राऽऽशु वाच्यः सविता नभस्थः ॥ ८ ॥

पञ्चाधिका विंशतिरक्षभागा
त्रिंशच्च यस्मिन्विहिता फलस्य ।
छाया तयोः शङ्कुसमा दिनार्धे
क्षिप्रं समाचक्ष्व तयोः स्फुटार्कान् ॥ ९ ॥

अक्षांशकाः पञ्चदशैव यस्मिन्
छाया रवेः पञ्चमभागयुक्ता

×श्रीपति. स्फुटा. १६, ब्राह्म, स्पष्टा. ११, सूर्य. स्पष्टा. ३३, लल्ल. स्पष्टा. १ गोला. स्पष्टा. ११–२, लघुभास्कर. ३–२६,

[illegible]

साधाङ्गुला स्यात्सममण्डलस्था
वाच्यो विवस्वान्खलु तत्र कीदृक् ॥ १० ॥

सप्तत्रिंशच्छाया सममण्डलगा पलाङ्गुलास्त्रिंशत् ।
वाच्यो जगत्प्रदीपः सममण्डलसंस्थितः सविता ॥ ११ ॥

छाया षोडशदृष्टा प्रागपरसमायता समदेशे ।
सार्धाः सप्त पलांशास्तत्र विवस्वान्कियान्वाच्यः ॥ १२ ॥

नीता रवेर्बलवता मरुता समस्ता
शश्यादयोऽत्र गणिताः सहतत्पराभिः ।
शेषो मया परिगतः खलु तत्पराणां
सैकं शतं कथय भानुमहर्गणं च ॥ १३ ॥

राशिभागसहिताः शशिलिप्ता
बालहस्तपरिमृष्टविनष्टाः ।
पञ्चवर्गविकलाः खलु दृष्टा-
स्ताभिरार्यदिनराशिशशाङ्कौ ॥ १४ ॥

राश्यंशका हृता वात्या भागशेषत्रिसप्तभिः ।
वाच्यो भौमः कियांस्तत्र कीदृशो वाऽप्यहर्गणः ॥ १५ ॥

राशित्रयं पञ्चदशांशयुक्तं
लिप्ता निशानाथसुतस्य पञ्च ।
एतत्समीक्ष्याक्ष्गतान्यहानि
यातानि तस्यैव च मण्डलानि ॥ १६ ॥

मघवद्गुरुराशिभागलिप्ताः
शिशुना चपलेन नाशितास्ताम् ।
नव तत्र लिप्तिकास्तु दृष्टा
दिनराशिं गुरुमध्यमाक्षताभिः ॥ १७ ॥

मण्डलादि भृगुजस्य सलिप्तौ
नष्टमत्र विकला दश दृष्टाः ।
सूर्यजस्य दश सप्तसमेता
ब्रूहि तौ दि[न]गणावथ शीघ्रम् ॥ १८ ॥

एवं ग्रहविषयं गणितकर्म बहुधा प्रदर्श्याधुना पूर्वप्रदर्शितकदा(कुट्टा)कारा... [illegible]दाहरणान्युद्देशकस्य प्रश्नद्वारेण बहुधा प्रदर्शयति । तत्र सार्धांशकोऽक्ष [illegible]: प्रश्नाः । मध्यंदिनच्छायाक्षाभ्यामर्कानयनेऽक्षार्चा( क्षांशाः ) [illegible]त्यादयः । सममण्डलच्छायाक्षाभ्यामर्कानयन नीता रवेरित्यादयः ॥ ७ ॥ ८।९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥१७॥१८॥

कुट्टाकारेणाऽऽह—

पञ्च सप्त नव भौमशशाङ्कौ
राशिपूर्वगणितौ समवेतौ ।
उच्यतां दिनगणः [illegible]
कीदृशौ च [illegible] ॥ १९ ॥
भौमशुक्रगुरुमध्यविशेषः
पञ्चराशिगणितं परिपूर्णः ।
उच्यतां दिनगणः कलियातो
देवमन्त्रिरुधिरौ च कियन्तौ ॥ २० ॥

सूर्याचन्द्रमसौ तुलाधारगतौ दृष्टौ मया तत्त्वतो
भागैर्द्वादशभिर्द्वयेन च युतौ सूर्यस्य वारोदये ।
लिप्ताभिः शशिशून्यसागरयुतौ जीवस्य वारे पुनः
शुक्रस्याथ शनैश्चरस्य दिवसे तुल्यौ दिन(किय)द्भिर्दिनैः॥२१
विलिप्ताभिरधिकोऽर्को विज्ञेयो भूधरेन्दुभिः ।
शोधयेच्च निशानाथाद्विलिप्ता धृतिसंमताः ॥ २२ ॥
नाडीभिरभ्युपगतादहनां गणा भागतस्तीक्ष्णां
शुभगणादिकेऽत्र निचिते नीतेऽधुना वात्यया ।

इष्टाः सम्मतिरेकरूपसहिताः शेषाः कलानां मया
वक्तव्यो युगणो गतश्च सवितुः स्पष्टाश्च ये(या)नाडिकाः॥२३॥

अर्काङ्गारकवासरैरपहृतः कश्चिद्दिनानां गणो
लब्धौ तत्र न वेद नैव च तयोः शेषौ मया लक्षितौ ।
यौ तौ मण्डलताडितावथ पुनर्भक्ते स्वैर्दृढौ पृथक्
तत्राऽऽप्तं मधुनाऽपनीतमधुना चाग्रे तयोस्तिष्ठतः ॥२४॥

भास्करे मिथुनपर्यवसाने
शर्वरी त्रिगुणसप्तघटी स्यात् ।
अक्षचापगुण(णि)ता वद तस्मिन्
लम्बकेन सहितं विगणय्य ॥ २५ ॥

...णाद्यानयने पञ्च सप्तेत्ययं भौमशशाङ्कयोर्योगविषयः । भौमशुक्रगुर्वित्ययं भौमजीवयोर्विशेषविषयः । सूर्याचन्द्रमसावित्ययं वारकुट्टाकारविषयः । भास्करे मिथुनेत्यक्षविषयः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३॥२४॥२५॥

भास्करेण परिचिन्त्य कृतोऽयं
मन्दबुद्धिपरिबोधसमर्थः ।
सम्यगार्यभटकर्मनिबद्धः
स्पष्टवाक्यकरणैः समवेतः ॥ २६ ॥

भास्करेण परिचिन्त्य कृतोऽयमित्यनेनास्य तन्त्रस्य प्रयोजनमागमपूर्वकता च प्रदर्श्यते ॥ २६ ॥

स्पष्टा(सर्वा)र्थानेककरणैश्छेद्यकेन्द्रगणे रवेः ।
यदिहास्ति तदन्यत्र यन्नेहास्ति...तत् ॥२७॥

इति महाभास्करीयेऽष्टमोऽध्यायः ॥८॥

इति महाभास्करीयं समाप्तम् ॥

सर्वार्थेति । सर्वार्थानामहर्गणमध्यमच्छायाकर्मादीनामनेकधा[क]रणं यस्मिं-स्तन्त्रे तथाविधेऽस्मिंस्तन्त्रे यद्ग्राहकमस्ति तदेवान्यतन्त्रेषु विधीयते । रवेर्ग्र-हणे छेद्यके चात्र यत्स्थित्यर्धादेः स्वरूपं प्रदर्शितं तदेव तन्त्रान्तरेषु प्रद-र्श्यते । अस्मिंस्तन्त्रे यद्ग्रहकर्म नास्ति, तत्तावदपि तन्त्र[illegible] श्लोकेन तन्त्रं स्तूयते ॥ २७ ॥

अधिकारो न येषां स्यादस्य भाष्यनिरीक्षणे ।
कर्ममात्रप्रबोधार्थं तेषां व्याख्येयमीरिता ॥
मुहूर्ताष्टकासिद्धान्तवाक्यभान्याबकर्मणाम् ।
दीपिकां गोलभटयोश्चाकरोत्परमेश्वरः ॥

इति परमेश्वरकृतायां कर्मदीपिकायामष्टमोऽध्यायः ॥ ८ ॥

---

## महाभास्करीयगतश्लोकाद्यचरणानामकारादिवर्णानुक्रमेणानुक्रमणिका ।

समाप्तेयं श्लोकाद्यचरणानामनुक्रमणिका ।

---

## महाभास्करीयतद्भाष्यागतपारिभाषिकविषयशब्दानामकारादिवर्णानुक्रमेण पृष्ठाङ्कसहिता सूची.

समाप्तेयं पारिभाषिकविषयशब्दसूची.